RSVP Series No:125

# वैखानसागमकोशः
# VAIKHĀNASA ĀGAMA KOŚA

## Volume VI

RASHTRIYA SANSKRIT VIDYAPEETHA
(Deemed University)
TIRUPATI
2007

# वैखानसागमकोशः

षष्ठं सम्पुटम्

## ६. नित्यार्चनप्रकरणम्

प्रथमो भागः

तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठग्रन्थमाला - १२५

# वैखानसागमकोशः

षष्ठं सम्पुटम्

## ६. नित्यार्चनप्रकरणम्

प्रथमो भागः

*सम्पादकौ*
आचार्यः लक्ष्मीनरसिंहभट्टः
आचार्यः हयवदनपुराणिकः

राष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
तिरुपतिः
२००७

वैखानसागमकोशः - षष्ठं सम्पुटम्

६.नित्यार्चनप्रकरणम् - प्रथमो भागः

प्रथमं संस्करणम्

प्रकाशनवत्सरः २००७



प्रतिकृतयः १०००

मूल्यम् -रू.

तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठेन
(मानितविश्वविद्यालयेन)
प्रकाशितः

मुद्रापकः स्टूडेण्ट्स् आफ्सेट् , तिरुपति.

कृतज्ञताज्ञापनम्

अक्षरयोजनम् - जी. वसुन्धरा ;अक्षरसंशोधनं पत्राङ्कनं च - एन् . वेङ्कटरमण प्रसाद् ।
आगमकोशपरियोजनायाः गणकयन्त्रप्रभागे ग्रन्थोऽयं मुद्रणाय सज्जीकृतः ।

RASHTRIYA SANSKRIT VIDYAPEETHA, TIRUPATI SERIES NO.125

# VAIKHĀNASA ĀGAMA KOŚA

## Volume VI

## 6 .Nityārcana Prakaraṇam

Part - I

*Editors*

PROF. LAKSHMINARASIMHA BHATTA

PROF. K. HAYAVADANA PURANIK

RASHTRIYA SANSKRIT VIDYAPEETHA

(Deemed University)

TIRUPATI

2007

VAIKHĀNASA ĀGAMA KOŚA - Volume VI

**6.Nityārcana Prakaraṇam** Part - I

First Edition 2007



Copies Printed: 1000

Price: Rs

Published by

RASHTRIYA SANSKRIT VIDYAPEETHA
(Deemed University)
TIRUPATI - 517 507 A.P. (INDIA)

Printed at : Students Offset, Tirupati.

**Assistance Acknowledged;**

Data Entry - G. Vasundhara; Data Correction & DTP - N.VenkataRamanaPrasad.
The book has been set-in pages in Computer Unit, Agama Kosa Project.

Dr. V.R. Panchamukhi

Chancellor

Rashtriya Sanskrit Vidyapeetha
(Deemed University)
Tirupati- 517 507

## *Foreword*

It gives me great pleasure in writing a foreword to this Sixth Volume of Vaikhanasa Agama Kosha. Rashtriya Sanskrit Vidyapeetha (Deemed University), Tirupati had launched this unique research programme of preparing comprehensive Agama Koshas, some years ago. After the publication of the first volume in 1993 this project had remained dormant for quite some time. I am very happy to find that the project has now been revived and this volume has been brought out after sustained effort and intensive study. I do hope that the remaining volumes of this project would also be brought out in due course of time.

This Volume covers many interesting subjects such as:

अर्चनप्रभेदाः, बेरव्यवस्था, उपचारविधयः, नित्यार्चनोपक्रमः, हविष्पाकः, मूर्तिमन्त्रः, षडासनेषूपचाराः, मन्त्रासनम्, स्नानासनम्

A Kosha is a useful document for understanding the specific meanings of and varieties of interpretations of the different concepts introduced in a subject. We have many *'Koshas'* pertaining to different disciplines of the Sanskrit literature. We have *'Nyaya Kosha'* of Pandit Jhalakikar, Bhimacharya, prepared after several decades of study of the

Nyaya sastra and the different commentaries and texts on the subjects. We have also Koshas on various shastras, such as Vishishtadwaita Kosha, Mimamsa Kosha, Srautha Kosha etc. I am pleased to learn that our Rashtriya Sanskrit Vidyapeetha, Tirupati is engaged in the task of preparing Dwaita Kosha also. I hope this Kosha would also be completed and published soon.

Agamas constitute an important component of Vedic literature. We have among others *Vaikhanasa Agama*, *Pancharatra Agama* and *Shiva Agama*. This present Kosha is pertaining to *Vaikhanasa Agama* and it has provided very useful insight into the various terms and concepts prevailing in the literature on *Vaikhanasa Agama*.

I would like to compliment with a feeling of profound appreciation and admiration, the editors of this Volume, viz Prof. L.N. Bhat and Prof. Hayavadana Puranik, for their painstaking effort in preparing this Volume. I would also like to record my appreciation of the contributions made by the other members of the research team working on this project.

The intellectual stature of the Vidyapeetha (Deemed University) would be elevated only when it brings out scholarly publications like this from time to time. Our Rashtriya Sanskrit Vidyapeetha has earned many laurels as a result of the scholarly work of its dedicated teaching and research faculty and also as a result of many innovative programmes such as Sanskrit-Science Exhibition, SANSK-NET Project, Palaeography Gallery projecting the evolution of Devanagiri script, Shastra-Varidhi Courses, Refresher Courses in shastras Training Campus on Research

Methodology, Manuscriptology and many Shastraratha Goshtis. It is indeed commendable that Rashtriya Sanskrit Vidyapeetha, Tirupati has also the unique distinction of earning A+ grade from the *National Assessment Accredition Council* (NAAC) and has been recognized by the UGC as a *Centre of Excellence* in the Shastras. The teaching & research faculty as also the administrative staff of the Vidyapeetha deserve our special words of greetings.

I am sure that the Vidyapeetha would make further contributions to the scholarly literature in Sanskrit, by bringing out many more basic studies of great intellectual value.

I offer my prayers at the feet of Lord Srinivasa that Rashtriya Sanskrit Vidyapeetha, Tirupati may achieve all greater heights in the pursuit of excellence in the service of Sanskrit and our heritage.

I hope that the scholarly world would find this volume useful and rewarding.

V.R. Panchamukhi
**(V.R. Panchamukhi)**

Grams: Vidyapeetha

Prof. Harekrishna Satapathy
Vice-Chancellor

Rashtriya Sanskrit Vidyapeetha
(Deemed University)
Tirupati- 517 507
Accredited with A+ Grade by NAAC

Tel/Fax: 0877 - 2287680
(O) 2287838
(R) 2287826
E-mail : hks_vc@yahoo.com

## PREFACE

The Rashtriya Sanskrit Vidyapeetha, Tirupati deems it a great honour and privilege to present vol. VI of *Vaikhanasa Agama Kosha* to the world of scholars and researchers interested in conventional as well as modern analysis of the rituals of worship of God. The concerned volume pertains to the part – I of *Nityarchana Prakarana,* an authentic treatise in the field of Agama. The first part of *Nityarchana Prakarana* deals with quite a number of issues like categories of ritual of worship ; iconic arrangement ; worship-appliances and refinements of the icons; the merit arising out of charitable endowment of golden temple etc.; process of collection and utilization of flowers, leaves and sprouts etc. during *pooja*; types of service courses; rituals of service course; the procedure of routine worship; cooking of food-oblation; chants pertaining to image; the services of six seats. These aspects are very important for the priests as well as the devotees offering prayers and worship to Lord.

With the advancement of science and technology in various fields in the contemporary society, it is heartening to note that more number of people are getting attracted towards an eternal spiritual order. It is a common belief that devotion to God by way of worship and performance of rituals leads a man to a realm of self-realisation and this realisation of

self is nothing but spiritual revelation. What is, therefore, required is to adopt the prescribed procedure of worshipping God by performing rituals as laid down in our Sastras. *Nityarchana Prakarana* is such an uncommon Sastra on Agama which enlightens us about almost all the paraphernalia required for a systematic *Pooja* to be performed before God. I am confident that this volume as the earlier ones will also cater to the needs and requirements of all those who have faith in our glorious tradition of *Sanatana Dharma* and cultural heritage.

I avail this opportunity to congratulate **Prof. L.N.Bhat** and **Prof. K. Hayavadana Puranik** for their sincere efforts and honest endeavours for preparing and bringing out this volume at appropriate time and thereby, I am sure, the dignity of our University has been heightened. I am also thankful to those who are associated with these project and printing works. I wish the publication a great success.

**(Prof. H.K. Satapathy)**
Vice-Chancellor

Rashtriya Sanskrit Vidyapeetha; Tirupati(A.P)
(Deemed University)

आगमकोशपरियोजना

Āgama Kośa Project

# उपोद्घातः

संविदितमेवेदं समवगतसर्वशास्त्राणां सङ्ख्यावतां समेषां यदत्र निसर्गकरुणा-वरुणालयस्य श्रुतिशिरसि विदीप्तस्य च भगवतः श्रीनिवासस्य राजधान्यां तिरुपतौ संस्कृतं संस्कृतिं च प्रतिष्ठापयितुं केन्द्रसर्वकारेण संस्थापितमिदं राष्ट्रियसंस्कृतविद्यापीठमासंस्थापना-न्निगमागमशास्त्रसंरक्षणदीक्षम् अभिनवप्रयोगशीलं संस्कृतमातरं संसेवमानं भारते स्थेयसीं प्रतिष्ठामध्यास्त इति।

अध्यात्मचिन्तनप्रधानेऽस्मिन् भारतवर्षे सकललोकोज्जीवनाय प्रवृत्तानां तन्त्रापराभिधाना-नामागमानां निरन्तरप्रचारः अनादेः कालात्प्रवर्तते । अविच्छिन्नगुरुशिष्यपरम्परया आगतो ग्रन्थसन्दर्भ आगमपदेनाभिधीयते। यद्यप्याचार्यमुखादधीत्य वेदानधिगच्छन्ति शिष्या इति वेदा अप्यागमशब्देन व्यवह्रियन्ते तथापि चिरादस्मत्पूर्वजाः वेदान् निगमशब्देन विग्रहाराधनप्रति-पादकानि तन्त्राण्यागमशब्देन च व्याजह्रुः।

भारतीयसंस्कृतिनिधेः वेदस्योपबृंहणाय प्रवृत्ताः शिवविष्ण्वादीनामाराध्यदेवानां पारम्यं प्रतिपादयन्तश्चागमाः शैवशाक्तवैष्णवभेदेन त्रेधा भिद्यन्ते। तत्र शैवागमाः कापालकालामुख-पाशुपतशैवभेदेन चतुर्धा भवन्ति। तत्र शैवभेदः पुनः वाम-दक्षिण-सिद्धान्तभेदेन त्रिधा। दक्षिणभेदे अन्तर्भूतानां काश्मीरागमानामुत्तरदेशेष्वेव प्रचुरः प्रचारः, शैवसिद्धान्तागमानां तु दक्षिणदेशेष्वेव प्रचारः। शैवागमाः शिवपारम्यं शिवपूजादिकं च प्राधान्येन प्रतिपादयन्ति। शाक्तागमा दक्षिणाचारवामाचारभेदेन द्विविधा भवन्ति। दक्षिणाचारः प्रायेण वैदिकमार्गानुसारी। वामाचारस्तु

वैदिकमार्गपरिभ्रष्ट इति वदन्ति। उभयेऽपीमे शक्तिपारम्यं शक्तिपूजादिकं च विशेषतः प्रतिपादयन्ति। वैष्णवागमाश्च वैखानसपाञ्चरात्रभेदेन द्विविधा भवन्ति। उभयेऽपीमे विष्णुपारम्यं विष्णुपूजादिकं च प्राधान्येन प्रतिपादयन्ति।

पाञ्चरात्रागमाः पुनर्भगवता नारायणेन स्वयमुपदिष्टाः दिव्याः, मुनिभाषिता आप्तोक्ता अदिव्या इति द्विविधाः।

भगवता विखनसा भृग्वत्रिमरीचिकाश्यपेभ्यश्चतुर्भ्यः उपदिष्टः तैश्च प्रचारं नीतः वैखानसागमः।

शैव-वैष्णवाद्यागमानां विषयप्रधानाः आगमकोशग्रन्थाः समेषामागमतत्त्वावबोध-कुतूहलिनां महते उपकाराय कल्पन्त इति विद्यापीठसंस्थापकनिदेशकानां डा. बि. आर्. शर्ममहोदयानामभिसन्धिमनुरुध्य तदानीन्तनेन तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठसंघेन (Kendriya Sanskrit Vidyapeetha Tirupati Society) विमर्शनिपुणानामन्ताराष्ट्रियख्यातिभृतां विद्यापीठसंघाध्यक्षाणां डा. वि. राघवन् महोदयानामाध्यक्ष्ये संशोधनप्रकाशनसमितिः व्यवास्थाप्यत यस्यां संशोधनप्रकाशनमर्मज्ञाः डा. एस्. एम्. कत्रे, डा. पि. एल्. वैद्य, डा. आर्येन्द्रशर्मा, डा.बि. आर्. शर्मा इत्येवं विश्वविख्याताः विद्वांसः सदस्या आसन्। तेषां मार्गदर्शनमनुरुध्य विद्यापीठस्य अनुसन्धानप्रकाशनविभागस्य विद्वद्भिः क्रिस्तूत्तरचतुःषष्ट्यधिकनवशतोत्तरैकसहस्रतमवत्सरतः क्रिस्तूत्तरषडशीत्यधिकनवशतोत्तरैकसहस्रतमवत्सरं यावत् (1964 -1986 A.D) उपलभ्यमानेभ्यः वैखानसपाञ्चरात्रागमग्रन्थेभ्यः, कतिपयेभ्यः शैवागमग्रन्थेभ्यश्च आगमकोशोपयोगिनो विषयाः सङ्कलिताः संशोधिताश्च।

तैर्विद्वद्भिःसङ्कलिताःसंशोधिताः अपेक्षिताश्च वैखानसागमग्रन्थभागाः वैखानसागम-कोशसम्पुटेषु समावेश्यन्त समावेशयिष्यन्ते चेत्येतदत्राविस्मरणीयमास्ते।

समापितविषयसङ्कलनेभ्यो वैखानसागमग्रन्थेभ्य उद्धृतं वैखानसागमकोशस्य प्रथमं सम्पुटं त्रिनवत्यधिकनवशतोत्तरैकसहस्रतमे (1993) क्रैस्तवीयसंवत्सरे विद्यापीठेन

प्रकाशितम् । निरवरोधं पुनरागमकोशकार्यस्य निर्वर्तनाय विद्यापीठे आगमकोशपरियोजना मानवसंसाधनविकासमन्त्रालयेन द्व्यधिकद्विसहस्रतमे क्रिस्तुवत्सरे (2002) भूयः प्रकल्पिता। विद्यापीठकुलाधिपतयः डा. वि. आर् . पञ्चमुखिमहोदयाः, कुलपतिचराः आचार्याः डि.प्रह्लादाचार्याश्च अस्मिन् विषये प्रशंसार्हाः। एते धन्यवादशतेन सभाज्यन्ते।

वैखानसागमकोशस्य द्वितीयं तृतीयं च सम्पुटं बेरनिर्माणप्रकरणाभिधानं चतुरधिकद्विसहस्रतमे (2004) क्रैस्तवीयसंवत्सरे विद्यापीठेन प्रकाशितम् । तत्र द्वितीये सम्पुटे भगवतः पञ्चरूपाणि, तालमानविभागः, शिलासङ्ग्रहणम्, दारुसङ्ग्रहणम्, ध्रुवबेरकल्पनम्, मत्स्यादिध्रुवबेरकल्पनम् इति, तृतीये च सम्पुटे ध्रुवबेरोत्सेधः शिलाशूलस्थापनम्, कौतुकादिबेरकल्पनम्, परिषद्देवबेरकल्पनम्, भक्तबेरकल्पनं चेत्येवमादयोंऽशाः समाविष्टाः।

चतुर्थं सम्पुटं 2005 तमे क्रिस्तुसंवत्सरे प्रकाशितम्। अत्र प्रतिष्ठाशब्दनिर्वचनमारभ्य प्रतिष्ठाविधानपर्यन्तम् अष्टादशशीर्षकेषु विषयविशेषाः समाविष्टाः। पञ्चमे सम्पुटे श्रीप्रतिष्ठाविधानमारभ्य गृहार्चाप्रतिष्ठाविधानपर्यन्तम् एकविंशतिशीर्षकेषु विषयविशेषाः विवेचिताः। इदमपि सम्पुटं 2005 तमे क्रैस्तुवत्सरे प्रकाशितम् । सम्प्रति वैखानसागमकोशस्य षष्ठं सम्पुटमद्य सन्नद्धं जिज्ञासूनां पुरत उपस्थाप्यते। अत्र अर्चनप्रभेदा इत्यारभ्य स्नानासनपर्यन्तं चतुर्दशशीर्षकेषु विषयविशेषाः विवेचिताः।

किञ्च आगमशास्त्रानुरागिणां विदुषां सुखावबोधाय विविधशीर्षकगतविषयविशेषाणां सारः सम्पुटेऽस्मिन् पृथक् संयोजितः। अधिगताङ्ग्लभाषाणां जिज्ञासूनां कोशगतसारभागस्य सुबोधार्थं आचार्य प्रभाकर आप्टे, डा. के. सूर्यनारायणमहोदयैश्च आङ्ग्लभाषयाऽनूदितः सारभागोऽपि अत्र सन्निवेशितो विराजते। एतत्कोशनिर्माणप्रकारविषये तथा क्लिष्टाया आगमशास्त्रीयभाषायाश्च विषये प्रथमसम्पुटे एव विस्तृततयोक्तमेवेति नात्र प्रतन्यते।

वैखानसागमकोशस्य निर्माणकार्ये उपकृतवद्भ्यः विद्यापीठस्य अनुसन्धानप्रकाशन-विभागस्य तदनीन्तनसूरिभ्यः श्रीमद्भ्यः डा. एम् . डि. बालसुब्रह्मण्यम् , डा. मुरलीधरपाण्डेय,

डा. आर् . महादेवन् , डा. वि. स्वामिनाथन् , डा. पि. पि. आप्टे, डा. यु. शङ्करभट्ट , डा. राघवप्रसाद चौधरी, लक्ष्मीनरसिंहभट्ट, ए. श्रीनिवास अय्यंगार् , पं. के. शठकोपाचार्य, डा. एन् . एस् . रामानुजताताचार्य, के. ए. बालसुब्रह्मण्यम् , डा. उमारमण झा, यशपालखजूरिया, डा.जयप्रसादबलोधी, डा. टि. जि. अनन्तसुब्रह्मण्यम् , एम् . ए. भट्ट, के. रघुनाथन् , श्रीराममिश्र, डा. के. हैमवतीशम् , डा. के. ई. गोविन्दन् , एम् . सायिरामसुब्रह्मण्यशर्मा, सि हेच् . पि. सत्यनारायण, एस् . सुब्बय्य संज्ञकेभ्यः शतशो धन्यवादान् वितरावः।

प्रकाशनीयत्वेन सङ्कल्पितस्य वैखानसागमकोशस्य संस्करणे नौ नियोजितवद्भ्यः विद्यापीठस्यास्य कुलाधिपतिभ्यः डा. वि. आर् . पञ्चमुखिमहोदयेभ्यः स्वाधमर्ण्यमावेदयावः।

वैखानसागमकोशस्य षष्ठसम्पुटस्य प्रकाशने उपकृतवद्भ्यः प्राच्यप्रतीच्योभय-विद्याविभासुरेभ्यः साहित्यादिविविधशास्त्रकुशलेभ्यः कुलपतिभ्यः आचार्येभ्यः हरेकृष्णशतपथि महोदयेभ्यः, कुलसचिवेभ्यः आचार्येभ्यः ए. गुरुमूर्तिमहोदयेभ्यश्च आधमर्ण्यं प्रकटयावः।

जगज्जीवातोः श्रीनिवासस्य कृपया वैखानसागमकोशस्य षष्ठं सम्पुटमिदं व्युत्पित्सूनाम् आगमतत्त्वकौतुकिजनानां विदुषां च बहूपकाराय स्यादिति मन्वहे।

तिरुपतिः — आचार्यः लक्ष्मीनरसिंहभट्टः

दिनाङ्कः २५.१.२००७ — आचार्यः हयवदनपुराणिकः

# सूचीपत्रम्

# विशिष्टविषयसूची

## २. बेरव्यवस्था



## ३. अर्चनोपकरणानि तत्संस्काराश्च

### ५. पुष्पपत्राङ्कुरादीनि

### ६. उपचारप्रभेदाः

**७. उपचारविधयः**

**८. नित्यार्चने पूजाकालः**

**९. नित्यार्चनोपक्रमः**

**१०.हविष्पाकः**

## ११. मूर्तिमन्त्राः

### १२.षडासनेषूपचाराः



### १३. मन्त्रासनम्

## १४. स्नानासनम्

# वैखानसागमकोशस्य षष्ठं सम्पुटम्

# ६. नित्यार्चनप्रकरणम्

### [प्रथमो भागः]

## नित्यार्चनप्रकरणगतविषयविशेषाणां सारः

### १. अर्चनप्रभेदाः

साकारं निराकारं चेत्यर्चनं द्विविधम्। प्रतिमार्चनं साकारम्। स्थण्डिले सलिले हृदये सूर्यमण्डले वाऽऽराधनं निराकारम्। संस्कारान् अर्पणीयानि द्रव्याणि च मनसैव संकल्प्य प्रदानान्निराकारार्चनं तदुच्यते। तत्रेहामुत्र फलदायकं चक्षुषोर्मनसो हृदयस्य च प्रीतिजनकं पुष्पादिद्रव्यैः सुकरं दर्शनसौलभ्योपेतं विशेषभक्तिहेतुरिति च हेतुभिः साकारार्चनं श्रेष्ठम्। तन्नित्यं नैमित्तिकं चेति द्विविधम्। पुनरमूर्तसमूर्तभेदेनापि द्विविधम्। अमूर्तमग्न्याहुतिः। समूर्तं बिम्बपूजनम्। तत्र विशेषभक्तिहेतुत्वादिभिः समूर्तं श्रेष्ठम्। तदपि त्रिविधम्। बिम्बकूर्चजलेष्विति भेदात्। तत्रोत्तमा बिम्बपूजा। मध्यमा कूर्चपूजा। अधमा जलपूजा। पुनः समूर्तार्चनं द्विविधम्। आलये गृहे चेति भेदात्। आलये पूजा परार्था। गृहे त्वात्मार्था। परार्थपूजनं कुर्वन् तन्निर्वर्त्य पुनरात्मर्थपूजनं कुर्यादेव। गृहे षडङ्गुलादहीनं बिम्बं पूजयेत्। एककालं द्विकालं वा यथेष्टं गृहार्चनमनुमतम्। गृहार्चने गृहस्थोऽधिकारी। आलयार्चने गृहस्थो ब्रह्मचारी च। आलये त्रिकालपूजनं प्रशस्तम्।

शान्तिकं पौष्टिकं काम्यं चेति अर्चनं त्रिविधम्। यजमानस्य राज्ञो वा जन्मर्क्षे विष्णुपञ्चदिनेषु च मध्याह्नकाले काम्यार्चनं कार्यम्। ऐकाहिकोत्सवक्रमेण ग्रामप्रदक्षिण-तीर्थस्नानप्रभूतहविर्दानादि च कार्यम्। पूर्वं नित्यार्चनं कृत्वैव पश्चान्नैमिकार्चनं कार्यम्। किं चार्घ्यान्तहविरन्तहोमान्तबल्यन्तमुखवासान्तभेदेन पञ्चधार्चनं विभज्यते। तत्र होमान्तं शान्तिकं,बल्यन्तं पौष्टिकं, मुखवासान्तं शान्तिपुष्टिकरमित्युच्यते। भूमिर्देवालयो बिम्बमर्चनं प्रतिष्ठाऽऽवाहनं मन्त्रो द्रव्याणि विधिरर्चाप्रयोगश्चेति भक्तिपुरःसराणि दशार्चनाङ्गानि भवन्ति।

## २. बेरव्यवस्था

एकस्मिन् विमाने पञ्च बेराणि त्रीणि द्वे एकं वा कल्पयेत्। ध्रुवकौतुकौ-त्सवस्नपनबलिबेराणि पञ्च चेत् प्रशस्तानि। अशक्तौ ध्रुवौत्सवबलिबेराणि। ध्रुवार्चाबेरमेकं वा। अथवा एकस्मिन् विमाने कौतुकौत्सवार्चाबेराणि त्रीणि प्रकल्पयेत्। ब्रह्मणः स्थाने कौतुकं तस्योत्तरतः औत्सवं कौतुकस्य दक्षिणे अर्चाबेरं च स्थापयेत्। स्नपनबेराभावे औत्सवे स्नपनं कार्यम्। गर्भालयस्य सङ्कोचे मुखमण्डपे अन्तराले वा स्नापनोत्सवौ संस्थाप्य पूजयेत्। औत्सवस्नपनयोरभावे कौतुके स्नापनादि कार्यम्। नित्यार्चाऽधिकार्चा विशेषार्चेति त्रिविधमप्यर्चनं कौतुके शक्यम्। अकामार्चने ध्रुवं, सकामाकामयोर्द्वयोरपि कौतुकं प्रशस्तमुच्यते। नित्यार्चने कौतुकं, काम्यार्चने औत्सवं, नैमित्तिकार्चने अर्चाबिम्बं च प्रशस्तम्। नित्यार्चने कौतुकस्य पूजानन्तरं औत्सवबलिबिम्बयोरर्चनं कार्यम्। नैमित्तिककर्मसु उत्सवस्नपनादि अर्चायां कार्यम्।

## ३. अर्चनोपकरणानि तत्संस्काराश्च

युगाङ्गुलविस्तारं द्व्यङ्गुलोत्सेधमर्घ्यपात्रं, षोडशाङ्गुलं मूले, सप्ताङ्गुलोच्चं भित्तौ,

द्व्यङ्गुलविस्तृतमोष्ठे, शरावाकृति च पादोदकपात्रं, मूले षडङ्गुलविस्तारं, द्वादशाङ्गुलोत्सेधमोष्ठे एकाङ्गुलविस्तारं धुत्तूरकुसमोपममाचमनतोयाधारपात्रं, सुवर्णरजतकांस्यानामन्यतमेन चतुरङ्गुलविस्तारं तदर्धोत्सेधं सुवृत्तमावाहनपात्रं च कार्यम्। आवाहनार्थमिदं प्रणिधिपात्रं प्रस्थमात्रं कुडुबुमात्रं वा कार्यम्। नित्यनैमित्तिकाभिषेकार्थं सुवर्णाद्यैश्चतुर्विंशतिषोडशद्वादशाङ्गुलविस्तारायामं समवृत्तमङ्गुलोत्सेधभित्ति, एकाङ्गुलोष्ठं, मध्ये चतुरङ्गुलविस्तारायामकर्णिकाकारं, तन्मध्ये रत्नं सुवर्णं वा निक्षिप्य परितोऽष्टदलोपेतं पार्श्वयोर्गण्डिकाभ्यां युक्तं रहितं वा सहस्रधारापात्रं कार्यम्। द्वादशाङ्गुलकुक्षिविस्तारं तदध्यर्धोत्सेधमधस्तात् षडङ्गुलविस्तारं चतुरङ्गलकण्ठं , द्व्यङ्गुलोष्ठं पार्श्वे नासिकायुतं गण्डिकापात्रं कार्यम्। एकद्वित्रभारजलपूर्णां सुदृढां सुवृत्तां चतुरश्रां वा ग्रीवाहीनां पार्श्वयोर्वलयसंयुक्तां, मृण्मयत्वे वलयहीनां सुग्रीवां जलद्रोणीं कारयेत्। षडङ्गुलविस्तारं त्र्यङ्गुलोत्सेधं दशाङ्गुलोदरं पानीयपात्रं कार्यम्। सुवर्णरजतताम्रदारुभिर्द्वादशाङ्गुलविस्तारं समवृत्तमर्धाङ्गुलोच्चभित्ति पद्माकारपादं मुखवास(ताम्बूल)पात्रं कार्यम्। सुवर्णरजतताम्रकांस्यैः द्वादशाङ्गुलमारभ्य षट्त्रिंशदङ्गलान्तं त्र्यङ्गलवृद्ध्या नवधा पात्रविस्तारमर्धाङ्गुलिभित्त्युन्नतं द्वियवोष्ठविस्तारं हविष्पात्रं कारयेत्। चतुर्विंशत्यङ्गुलायामां, तदायामं पञ्चधा कृत्वा द्व्यंशाग्रायतामष्टाङ्गुलविस्तारां दर्वीं कारयेत्। सूवर्णरजतताम्रकांस्यैः प्रस्थपूरितं मधुपर्कपात्रं कार्यम्। तच्च चन्द्रदेवताकं ज्ञेयम्। देवेशाय बलिप्रदानेन देवादीनां नृणां च बलं वर्धते। अतो बलिरिति बलिः साधूच्यते। आचार्यहस्तेन त्रिंशदङ्गुलविस्तारं भुवङ्गार्धविस्तारं वा समवृत्तं तत्परित एकाङ्गलोन्नतं सीमावृत्तं, तन्मध्ये पद्मस्य कर्णिकावदष्टाङ्गुलोन्नतं वृत्तं तत्परितो द्व्यङ्गलायतैरष्टदलैर्युक्तं बलिपात्रं कारयेत्। बलिपात्रं सौवर्णमुत्तमम्। राजतं मध्यमम्। ताम्रजमधमम्। अथवा कांस्यमपि यथालाभं ग्राह्यम्। परिमाणतश्च बलिपात्रं चतुःषष्ठिपलं श्रेष्ठम्। पञ्चाशत्पलं मध्यमम्। द्वात्रिंशत्पलमधमम्। शङ्खपद्मसमाकारे आढकसंपूर्णे तदर्धसंपूर्णे वा जलनिर्याण-

मार्गयुतनालयुक्ते शङ्खनिधिपद्मनिधिपात्रे कार्ये। चतुर्विंशत्यङ्गुलविस्तारं द्व्यङ्गुलोत्सेधमर्धाङ्गुलौष्ठं स्वर्णादिमयं पुष्पपात्रं कार्यम्। तदलाभे नालिकेरपत्रैस्तालपत्रैर्वा फेलावत् कार्यम्। अष्टषट्चतुस्तालविस्ताराऽष्टषट्चतुर्हस्तायता पुष्पफलका कार्या। वेदाङ्गुलविस्तारं पञ्चाङ्गुलविशालोदरं वेदाङ्गुलास्यतारं गन्धपात्रं कार्यम्। ताम्रेण पित्तलेन वा षडङ्गुलविस्तारं तावदुत्सेधमर्धाङ्गुलौष्ठमधस्तादिद्वपादमष्टाङ्गुलायतदण्डं धूपपात्रं कार्यम्। धूपे बृहस्पतिं पादयोर्वह्निं वक्त्रे नागं च चिन्तयेत्। व्याधिनाशो धूपफलम्। स्वर्णाद्यैश्चतुर्विंशतिषोडशद्वादशाङ्गुलविस्तारं समवृत्तमर्धाङ्गुलोच्चभित्ति, मध्येऽब्जदलयुतं मध्यादिनवदिक्षु दीपाधारयुतं नीराजनपात्रं कार्यम्। पञ्चाङ्गुलविस्तारमर्धाङ्गुलोष्ठमश्वत्थपत्राकारमष्टदिक्षु चतुर्दिक्षु एकस्यां दिशि वा वर्त्याधारयुतं धूपपात्रवद्दण्डं तद्वत्पादं वा दीपपात्रं ताम्राद्यैः कार्यम्। अयसा हस्तमात्रमेकाङ्गुलविस्तारमग्रे धुत्तूरपुष्पोपमं दीपाधारमधस्ताद् दारुनिर्मितं मुष्टियमं हस्तदीपपात्रं कार्यम्। दीपो गोघृतेन कृतो ग्राह्यः। तत्रापि कापिलेन घृतेन कृतः प्रशस्तः। सोऽप्यष्टाङ्गुलोच्छ्रयः श्रेष्ठः। तदर्धो मध्यमस्तदर्धोऽधमः। देवपूजायां दीपकाले समीपस्थेषु कर्मसु गव्यं घृतं बाह्येषु तैलं नारिकेलस्नेहो वाऽन्यवृक्षस्नेहो वा ग्राह्यः। आजमाहिषाविकप्राण्यङ्गजवृक्षबीजोद्भवकृता दीपा निषिद्धाः। दीपे रोहिण्यादि कृत्तिकान्तनक्षत्रदेवताः, मध्ये चन्द्रमसं, ज्वालायां श्रियं चेति दीपदेवता अर्चयेत्। आज्यस्थालीं शिरसा पाणिभ्यां वा वहतो नम्रकायान् पुरुषान् स्त्रियो वा कारयेत्। द्वारपार्श्वयोस्ताम्रेणायसा दारुणा वा द्वारसमोत्सेधं चतुरङ्गुलविस्तारं त्र्यङ्गुलघनं दीपमालादण्डं, चतुरङ्गुलायतान् त्र्यङ्गुलविस्तारान् द्व्यङ्गुलनालान् दीपाधारांश्च दण्डसंघट्टितान् कारयेत्। शङ्खपादिका बकपादिका पात्रपादिका स्थालिपादिका चेति चतुर्विधा त्रिपादिका। तत्र द्व्यङ्गुलोच्चा तत्सममुखविस्तारा शङ्खपादिका। षडङ्गुलमुखतारा तच्चतुर्गुणपादायामा बकपादिका। चतुःषडङ्गुलविस्तारा तत्समोत्सेधा पात्रपादिका। अष्टाङ्गुलविस्तारा तत्समोत्सेधा स्थालिपादिका। षडङ्गुलविस्तारास्या तत्समोत्सेधा पञ्चाङ्गुलविस्तारमूला

एकाङ्गुलशिखरा चतुर्यवगलोत्सेधा चतुरङ्गुलायातजिह्वा षडङ्गुलायतदण्डाग्रे चक्रेण वीशेन वा युता घण्टा कार्या। अष्टाङ्गुलविस्तारास्या तत्समोत्सेधा षडङ्गुलविस्तारमूला नवाङ्गुलायातजिह्वा शिखरे वलयोपेतशेषयुता महाघण्टा कार्या। दशहस्तायतं द्विहस्तविस्तारं सदशं श्लक्ष्णं क्षौमं कार्पासजं वा वस्त्रं ग्राह्यम्। सुवर्णरत्नसंयुक्तं हारादिभूषणं ग्राह्यम्। नवैकादशत्रयोदशाङ्गुलविस्तारायाममष्टद्वादशाङ्गुलायतनालं पूर्णचन्द्राकारं शुद्धकांस्यनिर्मितं दर्पणं कारयेत्। त्रिमात्रादिसप्तमात्रान्तायामा अग्रे तदर्धविपुला मध्ये तत्पादहीना आयामतुरीयांशोत्सेधा तत्त्रिभागद्विभागखुरा पादुका कार्या। शय्याविष्टरवत् पादहीनं समं वाऽऽसनविष्टरः कार्यः। द्वात्रिंशदष्टाविंशति चतुर्विंशति विंशति षोडशद्वादशाष्टाङ्गुलविस्तारायामः उपरि चतुरङ्गुलोत्सेधवेदिकायुक्तो वामपार्श्वे वारिमार्गयुतः स्नानविष्टरः कार्यः। उत्तममध्यमाधमभेदेन त्रिविधं छत्रं षट् पञ्च चतुस्तालविस्तारं कार्यम्। हेममकुटोपेतं तदुत्तमं, ताम्रपित्तलमकुटोपेतं मध्यमं, दारुमकुटोपेतमधमम्। चतुस्तालविस्तारं छत्रवद् वस्त्रेणाच्छाद्य तदुपरि मयूरपिञ्छैश्चाच्छाद्य छत्रवन्मकुटोपेतं पिञ्छं कारयेत्। षट्तालविस्तारं संक्षेपविस्तारयोग्यं वस्त्रेण तदुपरि क्षौमाद्यैश्चाच्छाद्य परितस्तालमात्रलम्बनोपेतं च कृत्वा छत्रवन्मकुटोपेतं जिनच्छत्रं कार्यम्। अष्टाल-विस्तारायामं वृत्तं चतुरस्रं वा वस्त्रेणाच्छाद्य मधूच्छिष्टेनालिप्य तदलाभे तालपत्रैराच्छाद्य, नालं संयोज्य दण्डाग्रे संयोजयेत्। तदिदं वर्षच्छत्रम्। चामरैः मयूरपिञ्छैर्वा, हेमरत्नमयं तारताम्रमयं दारुमयं वा हस्तप्रमाणदण्डं कृत्वा चामरं कारयेत्। मयूरपिञ्छैर्मयूरव्यजनं कार्यम्। चतुर्विंशतिषोडशद्वादशाष्टाङ्गुलसमवृत्तं वेणुना व्यजनं कृत्वा क्षौमाद्यैर्वेष्टयित्वा दण्डाग्रे संयोज्य क्षौमादिव्यजनं कार्यम्। विस्तारद्विगुणोत्सेधां शिबिकां कृत्वा सुवर्णेन मयूरपिञ्छैर्वा संछादयेत्। दन्तैर्दारुणा वा चतुर्विंशति विंशतिद्वादशाङ्गुलविस्तारां चतुःषडष्टपादयुक्तां सिंहव्यालगजाकारयुतां खट्वां कारयेत्। त्रिंशदङ्गुलविष्कम्भं त्रिगुणपरिणाहं यथोचितायाममुपधानं कार्यम्। पञ्चसप्तनवैकादशतालविस्तारायामं तद्द्विगुणोत्सेधं

मण्टपाकारं कूटाकारं वा रथं शिल्पशास्त्रोक्तविधिना कारयेत्। शुभैर्वृक्षैश्चतुस्तालायामां सुवृत्तां भेरीं कारयेत्। मुखद्वये चन्द्रादित्यौ, वलये चर्मणि च वरुणं, प्रहरणे प्रजापतिं, शब्देऽश्विनौ ब्रह्माणं वा, ध्रायां नागान्, कीलेषु सप्तर्षीन् नवग्रहान् वा, भेर्यां भूतीशं च चिन्तयेत्। अष्टादशाङ्गुलवर्तुलं भ्रमीकृत्यार्धं त्यक्त्वाऽर्धं सङ्गृह्य अर्धचन्द्राकारस्य मध्ये षडङ्गुलेन सुवृत्तं भ्रमीकृत्य तन्मध्ये गर्तं कृत्वा पार्श्वयोरुभयोः पट्टिकां पुष्पवल्लीयुतां कारयेत्। सैषा कर्त्रिकाफलका। चतुर्विंशत्यङ्गुलषोडशाङ्गुलायामं तत्त्रिगुणनाहमुलूखलम्, अष्टनवदशतालायामं द्वादशाङ्गुल परिणाहमवक्रं कृत्वा ऊर्ध्वाधः चतुरङ्गुल-मात्रेणायःपट्टमचलं संयोजयेदेवं मुसलं च कारयेत्। षोडशाङ्गुलायामं द्विमात्रविस्तारं सुतीक्ष्णं दात्रं द्वादशाङ्गुलदारुमुष्टिं संयोज्यायःपट्टेन बन्धयेत्। त्रिपञ्चाङ्गुलमेकवक्त्रं त्रिमात्रविस्तारं खनित्रं कृत्वा चतुस्तालमानेन दारुणा मुष्टिं कारयेत्। चतुर्विंशति विंशतिषोडशाङ्गुलायामां तदर्धविस्तारां विस्तारार्धोत्सेधामधःपेषणीं शिलामयीं कारयेत्। विस्तारसमायामां पादधिकनाहां षड्भागैक मुष्टिमूर्ध्वपेषणीं च कारयेत्। मध्यमाङ्गुलिपरिणाहां द्विवक्त्रां मूले वलययुतां यन्त्रिकामयसा कारयेत्।

द्वारविस्तारसमविस्तारां तदर्धायामां यवनिकां श्वेतवस्त्रेण कारयेत्। क्षौमैः कार्पासैर्वा द्वादशहस्तायतैः पञ्चनवद्वादशाम्बरैः युक्तमास्यरज्वायुक्तं तरङ्गं कारयेत्। स्तम्भायामसमं तदर्धविस्तारं स्तम्भवेष्टनं क्षौमाद्यैः कारयेत्। पङ्क्त्यायामविस्तारसमं वितानं कारयेत्। त्रिपञ्चसप्ताष्टदशद्वादशहस्तायतं षट् पञ्चचतुस्त्रितालविस्तारं श्वेतपीतश्यामरक्ताभं हस्तमात्रायामशिखरं, घण्टासहितं ध्वजं कारयेत्। विंशत्यङ्गुलविस्तारां त्रिंशदङ्गुलायतां पताकां कारयेत्। शिखरे रज्जुयुक्तं स्यात्।

पात्रादीनि पञ्चगव्येन शुद्धीकृत्य वास्तुहोमादि कृत्वा पात्रादिषु तत्तदधिपान् देवान् देवेशं च समावाह्याभ्यर्चयेत्। पुण्याहं वाचयेत्। आचार्यः आत्मसूक्तं जप्त्वा

भूतो भूतेष्विति मन्त्रेणाभरणैर्देवेशमलङ्कृत्यास्थानमण्डपेऽभ्यर्च्य हविर्निवेद्य अर्चापीठे संस्थाप्यार्चयेत्।

सहस्रधारापात्रे चन्द्रमण्डलपद्मे पद्मनिधिं शङ्खे शङ्खनिधिं चाभ्यर्च्य पुण्याहं वाचयित्वा हस्ताभ्यां पद्मं देवेशस्य मकुटोपरि धारयन् शङ्खपद्माख्यपात्रस्थजलं सहस्रधारापात्रस्थे पद्मे समर्पयेत्। पुरुषसूक्तेनाभिषिच्य हविर्निवेदयेत्।

संस्कृते नीराजनपात्रे दीपं सन्दीप्य यजमानो देवदासी वा तत्पात्रं शिरसा धृत्वाऽऽलयं प्रविश्याभिमुखे संस्थापयेत्। पात्रे चन्द्रं दीपे श्रिचाचार्योऽभ्यर्च्य नृत्तगेयवाद्ययुक्तं बिम्बस्य मूर्धादिपादपर्यन्तं त्रिः प्रदक्षिणं कारयेत्।

पादुके च संस्कृते देवाभिमुखे न्यस्य तयोः शेषमभ्यर्च्य देवस्य पादयोः संयोज्य सप्तविंशत्युपचारैरभ्यर्च्य हविर्निवेदयेत्।

संस्कृतेषु वाहनेषु गरुडं शयनेषु शेषम् आसनेषु शिवादीन् अन्येषु तत्तदधिदेवां आवाह्याभ्यर्च्य देवेशं शयनादिषु संस्थाप्याभ्यर्च्य ग्राममालयं वा प्रदक्षिणं कृत्वा संस्नाप्याभ्यर्च्य हविर्निवेदयेत्।

## ४. अर्चनोपकरणदानादिफलम्

स्वर्णविमाननिर्माणफलं केनापि वक्तुमशक्यम्। स्वर्णविष्णुबिम्ब-निर्माणफलमप्यनन्तम्। अर्चकस्य तपोयोगात् पूजायाश्चातिशायनात् आभिरूप्याच्च बिम्बस्य सन्निधिः प्रोच्यते हरेः। प्रदक्षिणप्रणामचिन्तनैर्यज्ञफलं लभ्यते। आलये जलाभ्युक्षणेन वरुणलोकप्राप्तिः। आलयानुलेपनेन गृहलाभः, स्वर्गलाभश्च। यतो भूदेवी विष्णोरतिप्रिया ततो विष्ण्वालयभुवो ह्यनुलेपनेन विष्णोरतिप्रीतिर्भवति। लेपनकर्ता नरोऽखण्डितं गार्हस्थ्यं, लेपकर्त्री नारी चावैधव्यं प्राप्नोति। उपलिप्ते आलये पुष्पप्रकिरणेन

दुर्गतिपरिहारः। कांस्यघण्टादानेन सुस्वरत्वं वाग्मित्वं च लभ्यते। ध्यानावाहनाभ्यां सर्वाभीष्टप्राप्तिः। आसनं दत्वा प्रतिष्ठाम् , स्वागतेनानुमानेन च स्वागतम्, पाद्याचमनाभ्यां पापनिवृत्तिं, एलाकर्पूरताम्बूलादिदानेनेह परत्र च सुखं लभते। अर्घ्यसमर्पणेन चन्द्रलोकप्राप्तिः ततः विष्णुपदप्राप्तिः। स्नानपानोदकदानेन विष्णुलोकप्राप्तिः। स्नानतोयदानेन वरुणलोकप्राप्तिः स्नानीयद्रव्यदानेनारोगता क्षीरस्नापनेन ज्ञानलाभः, ग्रहानुकूल्यं, सर्वजनानुकूल्यम् उत्तमलोकावाप्तिश्च। घृतस्नापनेन शतगोदानफलं लभ्यते। प्लोतवस्त्रोत्तरीयाणि दत्वा सोमलोकप्राप्तिः। क्षौमादिदानेन परलोकसुखम्। स्वर्णोपवीतं दत्वा ब्रह्मलोकप्राप्तिः, सालग्राममालां दत्वा विष्णुसन्निधिं प्राप्नोति। लक्ष्मीप्रतिकृतिमालिकां दत्वा देवीदेव्योः परमप्रसादं लभते। आलेपनद्रव्यदानेन शाश्वतसुखप्राप्तिः। गन्धद्रव्यसमर्पणेन सुगन्धिलाभः। आभरणादिदानेन स्वर्गे तेजोलाभः। स्वर्णाद्याभरणसमर्पणेन भूपतित्वप्राप्तिः। पुष्पमालासमर्पणेन स्वर्गे विपुलभोगप्राप्तिः। नित्यं तुलसीपुष्पसमर्पणेन विष्णुलोकप्राप्तिः। नवरत्नदानेन सालोक्यप्राप्तिः। उपानदादि दानेन विमानलाभः। भद्रपीठदानेन सर्वाभीष्टसिद्धिः। धूपद्रव्यसमर्पणेन स्वर्गप्राप्तिः। धूपोपचारसमर्पणेन सूर्यलोकप्राप्तिः। दीपदर्शनेन पापनाशः। वाद्यसमर्पणेन दिव्यस्थानप्राप्तिः। वीणावेणुध्वनिकारयितुर्वैष्णवलोकप्राप्तिः। शङ्खभेर्यादिदानेनेन्द्रलोकप्राप्तिः। नृत्तगेयवाद्यघोषकारयितुर्गन्धर्वलोकप्राप्तिः। नृत्तगीताद्युपचारसमर्पणेन दिव्यलोकप्राप्तिः। ध्वजदानेन कुलकेतुत्वप्राप्तिः। ध्वजसमर्पणेन विष्णुसामीप्यप्राप्तिः। वितानदानेन विष्णुलोकप्राप्तिः। आतपत्रदानेन इन्द्रलोकप्राप्तिः। मयूरच्छत्रार्पणेन वारुणलोकप्राप्तिः। चामरव्यजनछत्रदानेन स्वाराज्यलाभः। दासदास्यादिदानेनात्मात्मीयसमस्तवस्तुदानेन च मुक्तिः करतलस्थिता भवति। रत्नमण्डपं प्रपां वा कुर्वाणः सालोक्यं भजते। स्वर्णसिंहासनार्पणेनैन्द्रसम्पत्प्राप्तिः। स्वर्णशिबिकादिदानेन विष्णुलोकं दारवशिबिकादिदानेन सोमलोकं च गच्छति। हविः पात्रार्घ्यपात्रादिदानेन मुक्तिः फलम्। पुष्पमण्डपप्रपानिर्माणेन नित्यपुष्पफलं, मात्रादानेन सर्वकामावाप्तिं,

मधुपर्कं दत्वा चन्द्रलोकं, हविर्निवेदनेन प्रतिष्ठाफलं, प्रभूतहविर्निवेदनेन जीर्णोद्धारफलं, च लभते। फलसमर्पयितुः फलं वर्णयितुमशक्यम्। पानीयदानेन हविर्दानार्धफलं, ताम्बूलमुखवासदानेन सर्वैश्वर्य विष्णुलोकावाप्तिं च प्राप्नोति। बलिदर्शनेन यज्ञफललाभः। बलिप्रदक्षिणं कारयित्वा विष्णुलोकं गच्छति। यद्यद् द्रव्यं दद्याद् दातुस्तत्तद् द्रव्यसमृद्धिर्भवति। खट्वादानेन कुबेरलोकप्राप्तिः। विष्णुकथा संकीर्तनस्तोत्रध्यानैर्विष्णुलोकप्राप्तिः, विष्णवर्चनाविधीनां श्रवणकथनाभ्यां सर्वपापनिवृत्तिपूर्वकविष्णुलोकावाप्तिरूपं फलं लभते।

## ५. पुष्पपत्राङ्कुरादीनि

पाणी प्रक्षाल्याचम्य कृताञ्जलिः पुष्पमेकं वरुणाय, तथा सोमाय चैकं, महीदेव्यै चैकं विसृज्य पूर्वमुखो भूत्वा शुद्धे पात्रे शुभानि पुष्पाणि देवस्यत्वेति मन्त्रेण संचिनुयात्। सञ्चितं पुष्पं पात्रेणैव समाच्छाद्यैकं पुष्पं पुष्परक्षकमुद्दिश्य प्रक्षिपेत्। परिवाराणां पुष्पाणि पृथक् पात्रे समाहरेत्।

पुष्पेषु बहुवर्णमुत्तमम्। सौवर्णं पुष्पं सर्वश्रेष्ठम्। न जातु निर्माल्यं भवति। तत् सदा शुद्धम्। नित्यं प्रक्षाल्यादाय पुनः पुनरर्चयेत्। तत्कालोत्फुल्लानि पुष्पाणि श्रेष्ठानि। तेषु श्वेतरक्तपीतकृष्णेति चतुर्वर्णं त्रिवर्णं चोत्तमम्। द्विवर्णं मध्यममेकवर्णं कनिष्ठम्। दैविकमानुषब्राह्मपैतृकभौतिकयाक्षगान्धर्वासुरराक्षसपैशाचमिश्रकभेदेनैकादशविधानि पुष्पाणि। चतुर्वर्णत्रिवर्णानि दैविकानि उत्तमानि। रात्रौ विकसन्ति पात्रे सन्यस्तानि ब्राह्माणि ग्राह्याणि। गृहीतपरिशीर्णं भौतिकम्। छिन्नारं भिन्नमस्तिष्कं याक्षम्। एकरात्रोषितं गान्धर्वम्। उत्पाटितमासुरम्। सकण्टकवृक्षभवं राक्षसम्। इमानि न संग्राह्याणि। बन्धूकजपाकिंशुककुसुम्भकनककोकमालीसूर्यनन्दचतुर्भुजानां पुष्पाणि पैशाचानि सर्वथा वर्ज्यानि। नरेणाशुचिना चण्डालपुल्कसादिना च स्पृष्टानि वैद्याधराणि पुष्पाणीत्युच्यन्ते। तानि च त्याज्यानि। श्वेतं पुष्पं शान्तिकरम्। पीतं पौष्टिकम्। रक्तं विद्वेषणम्। कृष्णं

सर्ववशीकरम्। श्वेतं विष्णोः प्रियकरं पुष्पम्। तस्मादपि क्रमात् मल्लिका मालती श्वेतपद्मं कर्णिकारः जातिः चम्पकं च श्रेष्ठम्। सर्वपुष्पेभ्यः तुलसी देवेशस्य प्रियतमा भवति। दूर्वा तुलसी बिल्व करवीरं चम्पकं विष्णुक्रान्तं भद्रा चेतीमानि सर्वकालार्चनार्हाणि। रात्रिपूजायां कपित्थदलं बिल्वपत्रसमं भवति। पुष्पालाभे बीजाङ्कुरा ग्राह्याः। तेषु च तापसाङ्कुरः श्रेष्ठः। सोऽर्चितोऽप्येकाब्दं निर्माल्यं नैव भवेत्। तावत्तावत् प्रक्षाल्यार्चयेत्। अशोकमन्त्रिबोधिनीनामङ्कुराश्च तथैव मासमर्चने योज्याः। तुलसी ह्रीबेरोशीराणां मूलं चार्चनार्हम्। नीपककोविदारशिरीषमदयन्तिकपुष्पाणि पूतिगन्धीनि च पुष्पाणि त्याज्यानि। यत्नविकसितानि भग्नच्छिन्नविशीर्णानि समुत्पाटितानि अगन्धपूतिगन्धीनि जले क्षिप्तानि निर्माल्यस्पृष्टानि एकाहातिक्रान्तानि नराघ्रतानि नखलोमादियुक्तानि श्मशानचण्डालवाटिकादिसमीपजानि च पुष्पाणि वर्जयेत्। अर्चको वारि दीपः पुष्पं चेत्येच्चतुष्टयं सामान्यतो ग्राह्यं, येन पूजनं पूर्णं भवेत्।

## ६. उपचारप्रभेदाः

विग्रहो भोगश्चेति उपचारशब्दस्यापरपर्यायौ। अर्चनार्थं विशेषेण ग्रहणादुपचारो विग्रह इत्युच्यते। देवोपचारहेतुत्वादुपचार इति चोच्यते। बाह्योपचारः स्पृश्यास्पृश्यभेदेन द्विविधः। आसन-पादपीठ-पादुकार्घ्य-तैल-पिष्टलेप-स्नानाङ्गमर्दन-वस्त्रोपवीताभरण-गन्ध-पुष्पाङ्गरागाः स्पृश्याः।

दर्पणधूपदीपनीराजनचामरच्छत्रध्वजव्यजननृत्तगेयवाद्यस्तोत्रवाद्यघोषा अस्पृश्या इति। भक्ष्यभोज्यलेह्यचोष्यपेयानि पञ्चाभ्यन्तरोपचाराः। दन्तमार्जनजिह्वाग्रनिर्लेप-मुखवासतोयानि बाह्याभ्यन्तरोपचाराः। स्पृश्या दृश्याः श्राव्या भोज्याश्चेति पुनश्चतुर्विधा उपचाराः। आसनपाद्यपुष्पगन्धार्घ्यानि स्नानादयः षट् मात्रा मधुपर्कः पुष्पाञ्जलिर्दक्षिणा चेति स्पृश्या उपचाराः तथा वस्त्रपुष्पमालाभूषणानुलेपनान्यपि स्पृश्याः। नृत्तधूपदीपच्छत्र-

चामरदर्पणवाहनदानरक्षाजलाञ्जल्युपचारा दृश्याः। गीतवाद्यवेदपुराणस्तुतयः श्राव्याः। मधुपर्कहविःपानीयमुखवासानि तथान्यानि देवस्य दक्षिणे हस्ते देयानि भोज्योपचारा इत्युच्यन्ते। आघ्रेयोऽपि पञ्चम उपचारोऽस्तीति केचन। धूपमधुपर्कार्घ्याणि आघ्रेयाणीति वदन्ति।

संख्याविवक्षया उपचाराः पुनर्नवधा विभज्यन्ते। यथा- ६४, ५५, ४८, ४२, ३६, ३४, ३२, २९, २७ इति। अष्टधा च यथा - १, २ , ६, ८, ११, २७, २९, ३२ इति। षोढा च यथा ३२, २९, २७, १३, ८, ६ इति। पुनरन्या अपि विधाः सन्ति यथा १२०, १०८, १६ इति। चतुःषष्ठ्युपचारास्तावदिमे भवन्ति यथा-

आसनं स्वागतम् अनुमाननम् पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः अर्घ्यम् आचमनं स्नानप्लोतं वस्त्रम् उत्तरीयं भूषणम् उपवीतं पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः आचमनं हविः मन्त्रः पानीयम् आचमनम् मुखवासः पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः अर्घ्यम् आचमनं दर्पणः छत्रं चामरं तालवृन्तं ध्वजः गजः रथः अश्वः नृत्तं गेयं वाद्यम् आयुधसेवा मङ्गलं वेदः पुराणं मात्रा मधुपर्कः हविः होमः पानीयम् आचमनं मुखवासः बलिः प्रणामः पुष्पाञ्जलिः स्तुतिः दक्षिणा अनुमाननं चेति।

चतुस्त्रिंशदुपचाराश्चेमे यथा - आसनं स्वागतम् अनुमाननं पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः अर्घ्यम् आचमनम् स्नानं प्लोतः वस्त्रम् उत्तरीयम् उपवीतं पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः आचमनं हविः पानीयम् आचमनं मुखवासः बलिः प्रणामः प्रदक्षिणं पुष्पाञ्जलिः स्तुतिः नृत्तं गेयं चेति।

द्वात्रिंशदुपचाराश्चेमे यथा - प्रणामः आवाहनम् आसनं स्वागतम् अनुमाननं पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः अर्घ्यम् आचमनं स्नानं प्लोतः वस्त्रम् उत्तरीयम्

उपवीतं भूषणं पाद्यम् आचमनं पुष्पं गन्धः धूपः दीपः हविः पानीयं ताम्बूलम् आचमनं होमः बलिः विसर्गश्चेति।

पक्षभेदेन चतुष्षष्टिचतुस्त्रिंशदुपचारा उत्तमोत्तमकल्पतया गीयन्ते। पञ्चपञ्चाशदुपचारा उत्तममध्यमतया, अष्टचत्वारिंशदुपचारा उत्तमाधमतया, द्विचत्वारिंशदुपचारा मध्यमोत्तमतया, षट्त्रिंशदुपचारा मध्यममध्यमतया, चतुस्त्रिंशदुपचारा मध्यमाधमतया, द्वात्रिंशदुपचारा अधमोत्तमतया, एकोनत्रिंशदुपचारा अधममध्यमतया, सप्तविंशत्युपचारा अधमाधमतया च गृह्यन्ते। अत्र सर्वत्र पूर्वमावाहनमन्ते विसर्गश्च साधारणतया गृह्येते। उपचाराणां पुनरुक्तिरत्र दृश्यते। तत्र नार्थभेदो द्रष्टव्यः।

षोडशोपचारा इमे यथा- आसनं स्नानं वस्त्राद्यलङ्कारः पाद्यमाचमनं पुष्पं गन्धः धूपः दीपः अर्घ्यम् आचमनं हविः पानीयम् आचमनं मुखवासः दक्षिणा चेति। इम एव पुष्पाञ्जलिस्तुतिभ्यां सहाष्टादशोपचारा भवन्ति। षोडशोपचारा राजोपचारा इत्युच्यन्ते।

षोडशोपचारमध्ये आसनाद्यर्घ्याचमनान्ता एकादशोपचाराः। इम एव प्रणामदक्षिणायुतास्त्रयोदशोपचाराः। पाद्याद्यर्घ्याचमनान्ताः अष्टोपचाराः। पुष्पाद्यर्घ्याचमनान्ताः षडुपचाराः। पुष्पाञ्जलिप्रणामौ द्वावुपचारौ। प्रणाम एकोपचारः।

अवतारेषु षोडशोपचाराः। हविर्हीने त्रयोदश। द्रव्यदेवार्चने परिवारार्चने तथा शिवादीनामर्चने च एकादशोपचाराः। स्नपने अष्टोपचाराः। होमागारे षडुपचाराः। विष्णवे नम इत्युक्त्वा पुष्पं पत्रं वा विसृज्य शिरस्यञ्जलिकरणं द्वावुपचारौ। देवागारं तथा बिम्बं दृष्ट्वा वा हृदि ध्यात्वा वा यत्र क्वापि अञ्जलिकरणमेकोपचारः। अशक्तानामिमौ द्व्येकोपचारौ। अग्निकुण्डे दर्भास्तरणं, पुष्पं गन्धो धूपो दीपोऽर्घ्यं चेति षडुपचाराः।

प्रभूतोपचार इत्यन्योऽप्यस्ति उपचारः। स काम्यो नैमित्तिकश्च भवति। यथा द्रोणमानाधिकैस्तण्डुलैः सिद्धं प्रभूतं भक्तं नानायोगरसान्वितबहुव्यञ्जनसंयुक्तं रसालदधिसूपसमन्वितं पानीयोपेतं मन्त्रवन्निवेदनीयम्। उत्सवान्ते स्नापनान्ते राज्ञो जन्मदिने यजमानस्य जन्मनक्षत्रे विष्णुपञ्चदिने कृत्तिकादीपदानान्ते आग्रयणपूजने तथाऽन्येषु पुण्यनक्षत्रेष्वपि अयं प्रभूतोपचारो देयोऽभीष्टदायको भवति।

## ७. उपचारविधयः

आवाहनविधिस्तावदेवं यथा- प्रणिधिं पुष्पकूर्चाक्षतसमन्वितां मन्त्रपूतेन तोयेनापूर्य पाणिभ्यां धारयन् हृदये देवं ध्यात्वाऽप्सु निवेशयेत्। तच्च तोयं कूर्चेन मन्त्रतो बिम्बस्य मूर्ध्नि स्रावयेत्। आपो हि विष्णोरायतनम्। ध्रुवकौतुकयोः सत्वे ध्रुवात् देवं प्रणिधौ निवेश्य कौतुके आवाहयेत्। प्रथमं हृदयात्प्रणिधिजलद्वारा यद् ध्रुवे आवाहनं तदचलं, ततो नित्यं यत् कौतुके आवाहनं क्रियते तच्चलमित्युच्यते। त्रिकालपूजायां प्रातरावाहनं सायमर्चनान्ते विसर्जनं च कुर्यात्। एकबेरार्चने तु नावाहनविसर्जने। मण्डले जले कूर्चे वाऽऽवाह्य पूजान्ते विसर्जयेत्। पुष्पदर्भकुशेष्वेकं पीठान्ते न्यस्य आस्यतामिति तत्रासीनं देवं ध्यायेत्। तदासनम्। हस्ते संमुखीकरणं स्वागतम्। मया कृतमिदं क्षमस्वेति याचनमनुमाननोपचारः। विष्णोः पादवत् पादुकयुगं हेमादिभिः कृतं समर्पणीयम्। दन्तजिह्वादिशुध्यर्थं दन्तकाष्ठार्पणं दन्तधावनम्। मुखप्रक्षालनार्थं जलस्रावणं मुखप्रक्षालनम्। अष्टाङ्गं यथालाभद्रव्यं वाऽर्घ्यं मन्त्रतो बिम्बमूर्ध्नि निवेदयेत्। प्रथमं 'आमावाजस्य' मन्त्रेणार्घ्यपात्राणि संशोध्य 'वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रम्' इति पात्राधिदेवं सोममाराध्य सिद्धार्थकुशाग्रतिलतण्डुलदधिक्षीराक्षततोयानि कुडुबमात्रं पृथक्पृथक् क्रमेण गायत्र्या पात्रे क्षिप्त्वा घृतेनाभिघार्य देवस्य ललाटान्तमुद्धृत्य दद्यात्। अष्टद्रव्याणामलाभे पञ्च त्रीणि द्वे वा। तदलाभेऽक्षतं वा कूर्चेन जलदानं वा। पादप्रक्षालनार्थमुदकं पाद्यम्।

एलातक्कोलयुक्तेन दूर्वाक्षतयुतेन वा मन्त्रपूतेन वारिणा कूर्चेन शङ्खाग्रेण वा पादयोः सेकः कार्यः। कुशाक्षतसमन्वितं तोयं देवस्य दक्षिणहस्ते आचमनार्थं देयम्। बिम्बशुद्धिं कृत्वा प्रक्षाल्य मन्त्रेण स्नापनं कार्यम्। स्नपनबेरे स्नपनम्। अन्यत्र प्रोक्षणमात्रम्। सौवर्णे बिम्बे न स्नानम्। तत्र प्रोक्षणं कार्यम्। त्रिकालार्चने प्रातरेव स्नापनम्। अन्यकाले प्रोक्षणम्। वर्णयुक्तेऽपि बिम्बे स्नापनं न विधीयते। स्नानोपचारो द्विविधः। बिम्बशुद्ध्यर्थोऽभिषेकः। अर्चनाङ्गतयाऽभ्युक्षणं चेति। प्रातरभिषेकोऽभ्युक्षणं च। मध्याह्नेऽभ्युक्षणमेव। रात्रौ नोभयमपि। वस्त्रेणाभ्यङ्गसंमर्दः समन्त्रः प्लोतोपचारः।

प्लोतवस्त्रोत्तरीयोपवीतानामलाभेऽङ्कुरदर्भकुशपुष्पाणामन्यतमं वा देयम्। सौवर्णैर्मणिमयैर्भूषणैः सुमैरपि मन्त्रेणाङ्गेषु योजनं भूषणोपचारः। मूर्ध्नि पीठे समन्ताच्च भुजयोः शङ्खचक्रयोः मन्त्रेण पुष्पविन्यासः पुष्पोपचारः। स्कन्धादा चरणान्तं लम्बिता स्रगुच्यते। कुशद्वयेन एकाङ्गुलग्रन्थिं चतुरङ्गुलमग्रं क्रियते, तत् पवित्रम्। चन्दनकोष्ठादीन् जलेन पेषयित्वा कर्पूरागरुकुङ्कुमैः संयोज्य देवस्य नाभेरूर्ध्वं सर्वत्र लेपयेत्। गुग्गुल्वगरुकोष्ठुकर्पूरोशीरचन्दनसर्पिर्घनगुडबिल्वेति दशद्रव्ययुतोऽङ्गारो धूप उच्यते। तेन चतुर्दिक्षु धूपयेत्। देवस्य दक्षिणपादमारभ्य वामपादावसानकं नेत्रान्तं प्रणवाकारतो दीपं दर्शयेत्। 'विष्णोः कर्माणि' मन्त्रेण दीपप्रदर्शनमश्रीविनाशकम्। घृतमधुगुडपयो-दधिप्रस्थमात्रं मधुपर्कमुच्यते। तद्देवस्याघ्रेयम्। हविश्च पानीययुतं दत्वाऽऽचमनान्ते कर्पूरजातीफलैलालवङ्गसहितं सक्रमुकं ताम्बूलं समन्त्रकं दद्यात्, तन्मुखवासमुच्यते। आलयाद्दक्षिणे आग्नेय्यां वा महानसे औपासनाग्निं सभ्यं वा कल्पयित्वा तत्र नित्याग्निं सन्न्यस्य, केवलं चुल्यामग्निं मन्त्रतः संसाध्य वा परिस्तीर्य सघृतेन चरुणाऽऽलयगतेभ्यः पार्षदेभ्यः मूर्तिमन्त्रैस्तत्तन्मन्त्रैर्वा हुनेत्। अयं होमोपचारः दक्षिणान्ते बलेः पूर्वं कर्तव्यः। पुष्पान्नार्घ्यैर्बलिं विधिना संसाध्य दीपाद्दीपमिव तत्र देवेशमावाह्य मन्दिरं प्रदक्षिणं कारयित्वा शक्तिं पुनस्तत्रार्पयेत्। अयं बल्युपचारः। विष्णुसूक्तेन प्रणामान् कुर्यात्।

मस्तिष्कसम्पुटप्रह्वाङ्गदण्डपञ्चाङ्गभेदेन प्रणामः पञ्चविधः। मनसा देवं चिन्तयन् मस्तकेऽञ्जलिं कुर्यात्। अयं मस्तिष्कप्रणामः। मनसा देवं चिन्तयन् हृदयेऽञ्जलिं कुर्यादयं सम्पुटप्रणामः। अञ्जलिं हृदये कृत्वा भक्त्या नतकायो भवेदयं प्रह्वाङ्गप्रणामः। भूमौ दण्डवत् शयित्वाऽञ्जलिं संप्रसारयेदयं दण्डप्रणामः। पाणी व्यत्यस्य बध्वा पादाङ्गुलिभ्यां जानुभ्यां ललाटेन चावनिं स्पृशेदयं पञ्चाङ्गप्रणामः। पूजान्ते स्तुतिमन्त्रैर्देवेशस्येष्टानुमोदनमुद्वासनोपचारः।

## ८. नित्यार्चने पूजाकालः

षट्कालं त्रिकालं द्विकालमेककालं वा देवदेवस्य पूजनमैहिकामुष्मिकफलप्रदम्। प्रत्यूषप्रभातमध्याह्नापराह्नसायंकालनिशीथाः षट् पूजाकालाः। उषःकालार्चनं प्रजापशुविवर्धनम्। प्रातरर्चनं जपहोमाभिवृद्धिदम्। मध्याह्नार्चनं राजराष्ट्राभिवृद्धिदम्। सायंकालार्चनं सर्वसस्याभिवर्धनम्। अपराह्नार्चनं दैत्यनाशनम्। निशीथार्चनं चतुष्पदाभिवर्धनम्। देवालयेषु त्रिकालपूजनं प्रशस्तम्। उदयान्मध्याह्नादस्तमयाच्च नाड्यः तिस्रः पञ्च सप्त वा पूजाकाला उच्यन्ते। ते च क्रमेणाधममध्यमोत्तमा भवन्ति। बलिहीने मध्यमः कालः स्यात्। हविर्हीने चाधमः। सप्तसु घटिकासु एका द्रव्यसंभारार्था। सार्धैका स्नानार्था। द्वे अर्चनार्थे। एका राजोपचारार्थे। हविरर्थमर्धम्। बल्यर्थमेका। शेषः शेषोपचारार्थ इति विवेकः।

उदयात्पूर्वं घटिकात्रये प्रबोधवाद्यघोषः। तत्काले अर्चकाः परिचारकाश्चोत्थाय स्नानसन्ध्योपासनादीनि कुर्युः। उदयात्पूर्वमेकघटिकायां कवाटोद्घाटनं दीपसंदीपनं मार्जनोपलेपनादि च। उदये देवं प्रणम्य निर्माल्यशोधनं कुर्यात्। पश्चादेकघटिकायां पात्रादिशुद्धिर्द्रव्यशुद्धिर्द्रव्यसंभारश्च कार्यः। ततो घटिकाद्वये स्नानम्। पश्चात् त्रये हविरन्तमर्चनं यवनिकोद्धरणं च। ततश्चैकघटिकायां नीराजनम्। ततो घटिकाद्वये

नृत्तगेयादि। ततश्चैकघटिकायां महाहविर्निवेदनं होमो बलिश्च। पश्चादेकघटिकायां बल्युद्धरणप्रणामपुष्पाञ्जलिकवाटबन्धनानि कार्याणि।

## ९. नित्यार्चनोपक्रमः

सर्वस्य विहिताकरणस्य दुष्कृतस्य प्रमादकृतयज्ञादिकर्मभ्रंशस्य च प्रायश्चित्तमेकं हरिस्मरणमेव। सर्वेऽपि वैदिकाचाराः सर्वे यज्ञाः तपांसि च विष्णुपूजाविधेरेव भेदाः। तत्कर्मफलदो हरिरेव। तस्मात् विष्णुपूजां कुर्वन् स्वकृत्यान्न च्युतो भवति।

आलययजमानार्चकपरिचारकजनानां लक्षणानि यथा- यजमानः सदाऽऽध्यात्मरतः धनी त्यागी विष्णुलाञ्छनलाञ्छितः देवस्य नित्यपूजोत्सवाद्यर्थं धनसंचयदाता आचार्याज्ञाप्रतीक्षः पूजके हितचिन्तकः परिचारकेषु प्रसन्नः किंकरेषु दयापरः तीर्थप्रसादसेवी निर्माल्येषु कृतादरश्च स्यात्। अर्चको मितभोजी जितक्रोधः ऋजुराचारवान् मन्त्रकल्पविशेषज्ञः भक्तिमान् नियतेन्द्रियः शुद्धात्मा सत्यसन्धः स्नानशीलो योगविच्च स्यात्। स च देवालयसमीपे सुखं निवसेत्। तन्नियोगेनालयेऽर्चनाद्यखिलं कार्यं स्यात्। स हि कार्यस्य निर्णेता धर्मगोप्ता देशिको देवसान्निध्यकारकः। अर्चकस्य सहायः परिचारकः। सम्मार्जनोपलेपनदीपोद्दीपनपात्रशोधनपानीयवहनपुष्पावचयनादीनि कार्याणि स कुर्यात्। पाचकोऽपि परिचारको हविष्पाकविधानज्ञः शौचाचारपरायणश्च स्यात्। सर्वानेतान् वैखानसानेव वृणेत्।

अर्चको ब्राह्मे मुहूर्ते उत्थाय मन्त्रेण स्नात्वाऽऽचम्य कृतप्राणायामः सावित्रीं जप्त्वा सन्ध्यामुपास्य देवादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं कुर्यात्। सूक्तानि महामन्त्रांश्च जपेत्। अग्निषु होमं च कुर्यात्। अरुणोदये यन्त्रिकां प्रणम्य बाह्वोः शिरसि वा न्यस्य यजमानपाचकपरिचारकैः सह सर्ववाद्यसमायुक्तो देवागारं प्रति व्रजेत्। प्रविश्य च देवमन्दिरं सद्मप्रदक्षिणं कृत्वा विमानं मणिकं च प्रणम्य मन्त्रेण यन्त्रिकां कवाटे

संयोज्य कवाटोद्धाटनं कृत्वाऽन्तःप्रविश्य देवस्य मुखं समीक्ष्य प्रणम्यानुमान्य च पाणिभ्यां त्रिः संप्रहार्य देवं प्रणमेत्। प्रतद्विष्णुरिति मन्त्रेणालयप्रदक्षिणं कर्तव्यम्। युग्मप्रदक्षिणमेव कुर्यात्। अयुग्मप्रदक्षिणमयुग्मप्रणामं च कृत्वा तद्दोषपरिहारायोद्यन्तमादित्यं पश्येत् द्वादशसूक्तं च जपेत्।

आलयं प्रविश्य देवं प्रणम्य भेरीपणवशङ्खादिसर्ववाद्यघोषेण देवं प्रबोधयेत्। आदर्शं गाः कन्याः हस्त्यश्वादीन् वेदज्ञान् ब्राह्मणान् नर्तकान् गायकांश्चैतान् माङ्गलिकान् देवस्य पुरतः स्थापयित्वा यवनिकामुद्वास्य नीराजनं कृत्वा माङ्गलिकान् देवाय दर्शयेत्। एतद्धि विश्वरूपदर्शनमुच्यते। देवाय धारोष्णं गोक्षीरं सशर्करं नवनीतं च निवेद्य पुनर्यवनिकां कृत्वा देवं मुहुः प्रणमेत्। शयनस्थं देवं जीवस्थाने निवेशयेत्। तस्मिन् काले ये देवेशं सेवन्ते तेषां पुण्यफलं देवैरपि वक्तुमशक्यम्।

ततः शिष्यो नित्यदीपादखण्डितादन्यान् दीपानुद्दीपयेत्। स्थितांश्च दीपान् घृतेनापूर्योज्ज्वलितान् कुर्यात्। 'अवधूते'ति मन्त्रतो मार्जन्या प्रादक्षिण्यक्रमेण मार्जयित्वा 'आशासु सप्ते'तिमन्त्रेण गोमयाम्भसा गर्भद्वारादि सर्वत्रोपलेपयेत्। तेनैव मन्त्रेण पञ्चगव्यैः संप्रोक्ष्य रङ्गवल्लीः कुर्यात्। तेनैव मन्त्रेण सर्वान् संभारानपि कूर्चयुक्तहस्तेन प्रोक्षयेत्। अर्चकाय मात्रां दत्वा पुनर्यवनिकां कुर्यात्। दुहतां दिवमिति घटमादाय जलार्थं गच्छेत्। वस्त्रखण्डेन घटस्य मुखं पिधाय आद्यमभिगृह्णामीति जलेनापूरयेत्। गजे वा मूर्ध्नि बाह्वोर्वा घटं गृहीत्वा वाद्यघोषपुरःसरं देवालयं गत्वा प्रदक्षिणं कृत्वा अन्तरस्मिन्निमेति ब्रह्माणमभिवाद्य सोमं राजानमिति गर्भगृहे जलकुम्भमैशान्य उत्तरे दक्षिणे वा त्रिपादोपरि विन्यसेत्। इदमापः शिवेति जलमभिमन्त्रयेत्। एलालवङ्गोशीरादीन् कुशदर्भांश्च कुम्भान्तरे क्षिपेत्। विधिवत् पुण्याहं वाचयेत्। हवींषि पचेत्। नश्यन्ति जगतामिति देवस्य निर्माल्यं शोधयेत्। अतीतेऽहनि रात्रौ पुष्पाणि निर्माल्यतां यान्ति। अतः प्रातरेव

निर्माल्यशोधनम्। मालानामितरेषां च तत्तत्काले उत्सवादौ विसर्ज्यान्यासामर्पणमस्ति। देवस्य निर्माल्येन विष्वक्सेनं पूजयेत्। अन्यदेवानां निर्माल्यमारामे विसृज्य पादप्रक्षालनं कुर्यात्। औत्सवादेर्निर्माल्यं भक्तानां पापनाशार्थं ददामीति वदन् प्रथमावरणे न्यसेत्। अर्चनकाले प्रतिलोमाः पतिताः पाषण्डिनश्च न दृश्याः। ते चार्चनं हविर्निवेदनं च वीक्षितुं नार्हन्ति। अतो यवनिकावरणं कार्यम्। आत्मनि विष्णुसान्निध्यार्थमर्चको विष्णुध्यानं कुर्यात्। यतो नाविष्णुरर्चयेद् विष्णुं, नाविष्णुर्ध्यायते हरिम्। अतोऽर्चकः पवित्रं धृत्वा चन्दनेन मृदा वोर्ध्वपुण्ड्राणि केशवादिप्रणामपुरःसरं धृत्वा प्राणानायम्य मातृकान्यासादि कुर्यात्। संकल्प्य तिथिवारादि कीर्तयेत्। त्रिपादोपरि निक्षिप्ते विशाले ताम्रभाजने अग्निः शुचीति मन्त्रेण स्नानादि पञ्चपात्राणि निक्षिप्य शोषणादि पात्रसंस्कारपूर्वकं प्रणवेन जलतुलसीपुष्पाणि तत्र विन्यस्य आग्नेयादिक्रमेण पञ्चपात्रेषु वसिष्ठसोम-यज्ञाङ्गेन्दुचन्द्रान् क्रमेणावाहयेत्। कर्पूरोशीरेलालवङ्गान् स्नानपात्रे, विष्णुपर्ण-पद्मदलदूर्वाश्यामाकान् पाद्यपात्रे, कुशाक्षततिलव्रीहयवमाषप्रियङ्गुसिद्धार्थानर्घ्यपात्रे, एलोशीरलवङ्गतक्कोलानि चाचमनपात्रे निक्षिप्य धारास्विति मन्त्रेण पात्राणि जलेन पूरयेत्। सुरभिमुद्रां प्रदर्शयेत्। घण्टायां घण्टाधिदेवता ब्रह्माद्याः पूजयेत्। शङ्खचन्द्रवरुणा-दीनर्चयेत्। उद्धरिण्यां पानीयपात्रे च सोमं, आसने धर्मं, प्लोते त्वष्टारं, वस्त्रे सूर्यम् उत्तरीये सोमं, भूषणे षण्मुखं, यज्ञसूत्रे सोमं, पुष्पे पुलं, गन्धे मुखवासे च पृथिवीम्, अक्षते काश्यपं, धूपे बृहस्पतिं, दीपे श्रियं, घृते साम, तैले पितॄन् उपधाने छत्रे पादुके च शेषं, यन्त्रिकायां मार्तण्डं, सिद्धार्थे सोमं, कुशाग्रे गङ्गां, तिलेषु पितॄन्, तण्डुले रविं, दध्नि यजुः, क्षीरेऽथर्वाणं, मधुपर्के ऋचं, मात्रायां शर्वं, हविःपात्रे दिवाकरं, हविष्षु पद्मगर्भं, पानपात्रे निशाकरम्, उपहारादिपात्रेषु दिवाकरं, मार्जन्यां ज्येष्ठां, नर्तके शर्वं, गायके साम, वादके नन्दीशं, शङ्खे पाञ्चजन्यं, गणिकास्वप्सरःस्त्रियः, परिचारेषु गरुडं,

विशिष्यानुक्तेषु सर्वेष्वपि द्रव्येषु विष्णुं चावाह्य पूजयेत्। तत्तद्द्रव्यसमीपतः तत्तद्द्रव्यधरत्वेन तदधिपान् स्मरेत्। इदं संभारार्चनम्।

## १०. हविष्पाकः

हविषःपाकार्थे आलयस्य प्रथमावरणे द्वितीयावरणे वा पाकशाला कार्या। अर्चकस्य गृहे वा पाकः कार्यः। पाकशाला दक्षिणोत्तरायता दीर्घा विमानेन समा पादहीना वा कार्या।

धान्येषु वेणुका यवाश्चात्युत्तमाः। ततः क्रमात् षाष्टिका नीवाराः प्रियङ्गवः शालयो व्रीहयश्चाधमाः। वरककोद्रवादिकुधान्यानि कृष्णधान्यानि च वर्ज्यानि। तथान्त्यजैः प्रतिलोमैश्चानीतानि त्रिवर्षातीतानि च। व्रीहीणामलाभे तण्डुला ग्राह्याः मासादूर्ध्वास्तु ते वर्ज्याः। लशुनगृञ्जनारनाल कोशातकी बिम्बालर्कफलानि वर्जयेत्। सहकार पनसकदली कूष्माण्डोर्वारुकादीनि ग्राह्याणि।

धान्यान्यापोहिष्ठेति प्रोक्ष्य शुद्धे देशे कटे समास्तीर्यातपेनाशोध्य संगृह्णीयात्। उलूखले सोमं मुसले सुदर्शनं च संपूज्य धान्यानि उलूखले प्रक्षिपेत्। योषितः संपूज्य शुद्धाभिस्ताभिः श्वासं स्वेदं च विसृज्यैव मूलमन्त्रेणावघातयेत्। निरस्तेति मन्त्रेण तानि धान्यानि शूर्पे प्रक्षिप्य शोधयित्वा तण्डुलान् शुद्धेषु नवपात्रेषु देवस्यत्वेति मन्त्रेण निक्षिपेत्।

हविषः प्रमाणम् - अष्टतिलमेकं माषम्। अष्टमाषमेकं शाणम्। विंशति शाणमेकं निष्कम्। दशनिष्कमेकं पलम्। चतुष्पलमेकं कुडुबम्। चतुष्कुडुबमेकं प्रस्थम्। चतुः प्रस्थमेकमाढकम्। यद्वा व्रीहीणां पञ्चविंशतिसहितं द्विशतमेका शुक्तिः। शुक्तिद्वयमेकं तिलम्। तिलद्वयमेकं प्रकुञ्चम्। प्रकुञ्चद्वयमेकं प्रसृति। प्रसृतिद्वयमेकं

कुडुबम्। कुडुबद्वयमेकमञ्जलि। अञ्जलिद्वयमेकं प्रस्थम्। प्रस्थद्वयमेकं पात्रम्। पात्रद्वयमेकमाढकम्। चतुराढकमेकं द्रोणम्. द्रोणद्वयमेका खारी। खारीद्वयमेकं भारम्।

विष्णोर्द्रोणं हविरुत्तमम्। द्रोणार्धं मध्यमम्। आढकं मध्यमम्। शक्तविषये तु अष्टद्रोणतण्डुलैरुत्तमोत्तमं हविर्भवति। षड्द्रोणैरुत्तममध्यमम्। पञ्चद्रोणैरुत्तमाधमम्। चतुर्द्रोणैर्मध्यमोत्तमम्। द्रोणत्रयेण मध्यममध्यमम्। द्रोणद्वयेन मध्यमाधमम्। द्रोणेनाधमोत्तमम् आढकद्वयेनाधममध्यमम्। आढकेन चाधमाधमम्।

भूतं हविश्चेति नित्यं हविर्द्विविधं भवति। विधिना यथाभागोपदंश घृतगुडदधि-फलयुक्तं भूतम्। यथाशक्त्युपदंशाद्यैर्युक्तं हविः। द्वात्रिंशदुपचारस्थले भूतमेव हविर्निवेदयेत्। विंशतिके हविर्निवेद्यम्। मुख्यं भूतं हविर्मध्याह्ने निवेदयेत्। षड्द्रोणप्रमाण शतप्रस्थं वा हविः प्रभूतमित्युच्यते। द्विशतप्रस्थादि सहस्रप्रस्थान्तं नवविधं महाहविरित्युच्यते। विशेषपूजायां प्रभूतं हविः काम्यके महाहविश्च निवेदनीयम्। मौद्गिकं पायसं कृसरं गौल्यं यावकं शुद्धान्नं चेति षड्विधं हविः। तण्डुलसमप्रमाणेन तदर्धेन वा मुद्गेन युक्तं हविः मौद्गिकम्। तण्डुलत्रिगुणं दुग्धं, तच्चतुर्भागमर्धं वा घृतं तत्समं च गुडं पच्यते चेत् तत् पायसान्नमित्युच्यते। तदेव तण्डुलार्धमुद्गमपि स्यात्। रम्भाफलैः पनसैर्नारि-केलफलैश्च युतं स्यादित्यपि केचन। तण्डुलार्धं तिलेन घृतेन गुडेन च सहितं पक्वं कृसरान्नं भवति। तण्डुलात् त्रिगुणं दुग्धं, दुग्धार्धं तोयं, तदर्धं मुद्गं च गुडघृतयुक्तं गौल्यमित्युच्यते। तण्डुलार्धयवयुक्तं यावकान्नमित्युच्यते। शुद्धैस्तण्डुलैः शुद्धान्नम्। शुद्धान्न-मौद्गिक-कृसर-पायस-यावक-गौल्यानि क्रमादुत्तरोत्तरं प्रशस्ततराणि भवन्ति। दधिघृतगुडमरीचिजीरकसर्षपयुक्तं मुद्गसारं नवमृत्कुम्भे पचेत्, तदपूपमित्युच्यते।

देव्योः परिवाराणां च देवेशस्य हविषोऽर्धमाढकं द्विप्रस्थं वा निवेदयेत्। हविः-पाके नवं मृण्मयपात्रं श्रेष्ठं तदलाभे लौहं वा। मासातीते मृण्मयपात्रे पाकं न कुर्यात्।

### ६.३.२८ हस्तदीपपात्रम्

**वि.२४.१८४**

अयसा हस्तमात्रमेकाङ्गुलपरिणाहं, वक्रसहितम्, अग्रे दीपाधारं धुत्तूरपुष्पोपममास्यतारं त्र्यङ्गुलं, चतुरङ्गुलं वा गर्तं चतुरङ्गुलं यवमात्रघनम्, अधस्ताद् दारुणा मुष्टियमं, यमद्वयं वा संयोज्य एवं हस्तदीपं कारयेत्।

### ६.३.२९ दीपस्य उत्तमादित्रैविध्यम्

**प्र.१९.७३ - ७५**

गोघृतेन कृतं यत्तु दीपमुत्तममुच्यते।।

चतुरङ्गुलमायामं राजसं दीपमेव हि।
दीपं तत्त्र्यङ्गुलायामं मध्यमं दीपमुच्यते।।

अधमं तु भवेद्दीपं अङ्गुलद्वयसम्मितम्।

**खि.२२.४७, ४८**

अष्टाङ्गुलोच्छ्रयज्वालो दीप उत्तम उच्यते।।
तदर्धं मध्यमो दीपस्तस्यार्धमधमं विदुः।

**ज्ञा.७३.१३२, १३३**

पिचुवर्तियुतं घार्तं तैलं वा दीपं पार्श्वे दीपयेद्दीपम्। अष्टाङ्गुलोच्छ्रयाः त्र्यङ्गलोच्छ्रयाः यथालाभोच्छ्रयाश्चोत्तममध्यमाधमा दीपाः।

## ६.३.३० उपादेया दीपाः

**खि.२२.५१ - ५३**

तस्मात्तु देवपूजायां दीपकाले विशेषतः।।

गव्यं घृतं विमिश्रं वा दीपेष्वनिशवर्तिषु।
समीपस्थेषु सङ्ग्राह्यं तैलं बाह्येषु कर्मसु।।

वार्क्षस्नेहेषु सङ्ग्राह्यो नारिकेलः प्रशस्यते।
अथवाऽन्यस्य वृक्षस्य स्नेहं बाह्यार्थमाहरेत्।।

**प्र.१९.७५, ७६**

कापिलेन घृतेनापि कृतं कर्पूरवर्तिकम्।।

दीपं विष्णुप्रियं प्रोक्तं सर्वसिद्धिप्रदायकम्।

## ६.३.३१ वर्ज्या दीपाः

**खि.२२.५० - ५४**

आजेनाज्येन यो दीपस्स भवेद्यक्षरक्षसाम्।
माहिषाज्येन यो दीपः सोऽसुराणां भविष्यति।।
आविकाज्येन यो दीपः स तु गान्धर्व उच्यते।।

-------------------------------।

प्राण्यङ्गस्य तु स्नेहन्तु सर्वदा परिवर्जयेत्।।

**प्र.१९.७६, ७७**

तामसं तु भवेद्दीपं माहिषेण तु सर्पिषा।।

वृक्षबीजोद्भवस्नेहदीपं पैशाचमुच्यते।
तामसं वापि पैशाचमयोग्यं दीपमुच्यते।।

**६.३.३२ दीपदेवताः**

**खि.२२.४३**

रोहिण्याद्यग्निऋक्षान्तदेवानामास्पदं भवेत्।
मध्ये चन्द्रमसं वर्तिर्ज्वालायां श्रियमर्चयेत्।।

**६.३.३३ दीपधारिणां प्रतिमाः**

**वि.२४.१८४**

आज्यस्थालीं शिरसा पाणिभ्यां वा वहतो नम्रकायान् पुरुषान् स्त्रियो वापि कारयेत्।

**६.३.३४ दीपमालादण्डः**

**वि.२४.१८४**

द्वारपार्श्वयोः ताम्रेण अयसा दारुणा वा दीपमालादण्डं द्वारसमोत्सेधं, चतुरङ्गुलविस्तारं त्र्यङ्गुलघनं ; वेदाङ्गुलायतान्, त्र्यङ्गुलविस्तारान् द्व्यङ्गुलनालान् दीपाधारान् दण्डेन सङ्घट्टितान् कारयेत्।

**६.३.३५ त्रिपादिकायाः चतुर्विधत्वम्**

**वि.२४.१८१**

त्रिपादिका चतुर्धा - शङ्खपादिका, बकपादिका, पात्रपादिका, स्थालिपादिका चेति।

**६.३.३६ शङ्खपादिकायाः लक्षणम्**

**वि.२४.१८१**

शङ्खपादिकोच्चं युगाङ्गुलं, तत्समं मुखविस्तारं त्रिपादयुता त्रिवक्रा

**६.३.३७ बकपादिकाया लक्षणम्**

**वि.२४.१८१, १८२**

बकपादिका मुखतारं षडङ्गुलं, तच्चतुर्गुणं पादायामम् ईषत् त्रिभङ्गिका त्रिपादसहिता ; तन्मूले सिंहपादवत्।

**६.३.३८ पात्रपादिकाया लक्षणम्**

**वि.२४.१८२**

पात्रपादिका चतुष्षडङ्गुलविस्तारा समोत्सेधा त्रिपादयुताऽधस्ताद् द्व्यङ्गुलेन शरावपृष्ठाकारं कारयेत्।

**६.३.३९ स्थालिपादिकाया लक्षणम्**

**वि.२४.१८२**

स्थालिपादिका विस्तारमष्टाङ्गुलं, तत्समोत्सेधं पादादधस्तात्पादाकारं कारयेत्। स्थालिपादिकामायसीं कारयेदिति केचित्।

**६.३.४० घण्टा**

**वि.२४.१८०**

घण्टाऽऽस्यविस्तारं षडङ्गुलं, तत्समोत्सेधं तन्मूलविस्तारं विषयाङ्गुलम्,

एकाङ्गुलं शिखरं, चतुर्यवं गलोत्सेधं, जिह्वा वेदाङ्गुलायता, वर्तिवत् षडङ्गुलं दण्डोच्छ्रयं, दण्डाग्रे चक्रं वीशं वा कृत्वा शेषं युक्त्यैव कारयेत्।

### ६.३.४१ महाघण्टा

**वि.२४.१८०**

महाघण्टास्यविस्तारमष्टाङ्गुलं, तत्समोत्सेधं तन्मूलविस्तारं षडङ्गुलं, गलं त्र्यङ्गुलोन्नतं षडङ्गुलपरीणाहं, पट्टिकाद्वयसंयुक्तमोष्ठमेकाङ्गुलं, शिखरोच्चं द्व्यङ्गुलं, नाहं सप्ताङ्गुलं, सुषिरयुक्तं, चतुर्नाडिसमायुक्तं ताराधर्वतिताऽऽनाहं जिह्वा नवाङ्गुलायता, तच्छिखरे वलयोपेतं शेषं युक्त्यैव कारयेत्।

### ६.३.४२ वस्त्रम्

**प्र.१९.७८ - ८०**

क्षौमं कार्पासजं वस्त्रं वृक्षभेदाङ्गसम्भवम्।
दशहस्तायतं चैव विस्तारं तु द्विहस्तकम्।।

मनोहरं तु सुश्लक्ष्णं विशेषं वस्त्रमुच्यते।
बेरायामार्धमानेन वस्त्रविस्तारमुच्यते।।

विस्ताराष्टगुणायामं सदशं तु सलक्षणम्।

### ६.३.४३ भूषणम्

**प्र.१९.८५ - ८७**

सुवर्णरत्नसंयुक्तं कुर्यादाभरणादिकम्।।

मुकुटं कुण्डलं चैव हारं केयूरकं तथा।

कटकं कटिसूत्रं च पुष्पं वै हारनूपुरे।।

कुर्यादुदरबन्धं च रत्नहारं च मेखलाम्।

हारं च कर्णपुष्पं च प्रतिमाया यथार्हकम्।।

## ६.३.४४ दर्पणः

### वि.२४.१८५

दर्पणं शुद्धेन कांस्येन नवैकादशत्रयोदशाङ्गुलविस्तारायामं, पूर्णचन्द्राकारं, नालमष्टाङ्गुलं, द्वादशाङ्गुलं वा, नानापट्टिकासहितं कारयेत्।

### प्र.१९.६४

दर्पणं च प्रदातव्यं ध्रुवाननसमं भवेत्।

## ६.३.४५ पादुका

### वि. २४. १८५

पादुकां सुवर्णरजतताम्राणामन्यतमेन त्रिमात्रादिसप्तमात्रान्तम् अर्धाङ्गुलवृद्ध्या त्रित्रिभेदं पादुकायामं, तदर्धमग्रविपुलं, तन्मध्यं तत्पादहीनं, तदुत्सेधम् आयामतुरीयांशं, तत्त्रिभागद्विभागं खुरं, शेषमूर्ध्वदलम्, अङ्गुष्ठोच्चं, तलोच्चं, चतुर्भागं, तच्छरांशयुगांशनालं, शेषं पुष्पम्, अङ्गुष्ठोच्चसमं, पुष्पविस्तारं, शेषं युक्त्यैव कारयेत्।

## ६.३.४६ आसनविष्टरः

### वि.२४. १९०

आसनविष्टरं शय्याविष्टरवत् पादहीनं समं वा कारयेत्।।

### ६.३.४७ स्नानविष्टरः

**वि.२४. १९०**

स्नानविष्टरं द्वात्रिंशदष्टाविंशतिचतुर्विंशतिविंशतिषोडशद्वादशाष्टाङ्गुल-विस्तारायामं, समचतुरश्रविस्तारार्धं, त्रिपादं वा, पादायामं, यथार्हं नाहं, चतुष्पादैर्युक्तं, तस्योपरि चतुर्दिशं चतुरङ्गुलोत्सेधवेदिकां वामपार्श्वे वारिमार्गयुतं कारयेत्, विधिविहीनं वा स्नानविष्टरमेवं कारयेदिति केचित्।।

### ६.३.४८ छत्रम्

**प्र.१९.८२ - ८५**

---------------- छत्रलक्षणमुच्यते।।

षट्तालं छत्रविस्तारम् उत्तमं समुदाहृतम्।
मध्यमं पञ्चतालं स्यात् चतुस्तालमथाधमम्।।

मौक्तिकं तु भवेच्छत्रं वस्त्रेणापिहितं तथा।
वस्त्रेण वा तथा कुर्यात् तालपत्रमथापि वा।।

छत्रं त्वधोमुखं प्रोक्तं दण्डं पिञ्छस्य दण्डवत्।

**वि.२४.१८७**

छत्रं चतुस्तालं, समवृत्तमधोमुखं वैणवेन तन्तुना बन्धनं कृत्वा वस्त्रेणाच्छाद्य कल्कं प्रलिप्य मुक्तादामयुतं, सरत्नहेमसञ्छन्नं, हेममकुटोपेतमुत्तमम्।---- --------- यथार्हं नालं दण्डं च कारयेत्। छत्रं चतुस्तालं --------- --------- वस्त्रेणाछाद्य धवलं कृत्वा ताम्रपित्तलमकुटोपेतं मध्यमम् ; - -------- यथार्हं नालं दण्डं च कारयेत्। छत्रं चतुस्तालं, ---------

--------- वस्त्रोणाच्छाद्य धवलं कृत्वा -----------------

दारुमकुटोपेतमधमम् ; यथार्हं नालं दण्डं च कारयेत्।

## ६.३.४९ पिञ्छम्

### प्र.१९.८० - ८२

मयूरपिञ्छैः कुर्यात्तु चतुस्तालं तु विस्तृतम्।।

अधोमुखं तु कर्तव्यमत ऊर्ध्वमुखं तथा।

पञ्चारत्निप्रमाणेन दण्डस्स्यादधमं तथा।।

अधिकं द्वादशाङ्गुल्यं मध्यमे चोत्तमेऽपि वा।

एवं पिञ्छं समाख्यातं --------------।।

### वि.२४.१८७

पिञ्छं चतुस्तालविस्तारायामं, सुवृत्तं, किञ्चिदूर्ध्वमुखं, छत्रवद्वस्त्रोणाच्छाद्य मयूरपिञ्छैर्बाह्यमभ्यन्तरं तत्समं चाच्छाद्य [1]पूर्ववन्मकुटनालदण्डं च कारयेत्।

## ६.३.५० जिनच्छत्रम्

### वि.२४.१८७

जिनच्छत्रं षट्तालविस्तारं, समवृत्तम्, अधोमुखं वैणवेन तन्तुना सङ्क्षेप-

1. छत्रवत्।

विस्तीर्णयोग्यं वस्त्रेण बन्धनं कृत्वा तदुपरि क्षौमाद्यैस्सञ्छाद्य परितस्तालमात्रं लम्बनं कृत्वा [1]पूर्ववन्मकुटयन्त्रनालदण्डैस्सहैव कारयेत्।

## ६.३.५१ वर्षच्छत्रम्

### वि.२४.१८७

वर्षच्छत्रमष्टतालविस्तारायामं, वृत्तं, चतुरश्रं वा वैणवैन तन्तुनाऽऽबध्य वस्त्रेणाच्छाद्य मधूच्छिष्टेनालिप्य अलाभे तालपत्रैराच्छाद्य [2]पूर्ववन्नालं, शुकनासिकां वा संयोज्य दण्डाग्रे संयोजयेत्।

## ६.३.५२ चामरम्

### प्र.१९.८८ - ९०

चामरैश्चामरं कुर्यात् पिञ्छैर्वापि मयूरजैः।
दण्डं हस्तप्रमाणं स्यात् बालदण्डप्रमाणकम्।।

हेमरत्नमयं दण्डं तारताम्रमयं तथा।
अथ वा दारुदण्डं स्यात् मयूरपिञ्छं च योजयेत्।।

एवं तु चामरं प्रोक्तम् -------------------।

### वि.२४.१८७ , १८८

चामरदण्डं सरत्नहेमताम्रजं, दारवं चतुर्विंशत्यङ्गुलायामं, पञ्चाङ्गुलनाहं, नानापट्टिकाकुम्भसंयुक्तं नानामण्डनसंयुक्तं च कृत्वा चमरीश्वेतवालैः यथायोगं यथाशोभं संयोजयेत्।

---

1.छत्रवत्। 2. जिनच्छत्रवत्।

## ६.३.५३ मयूरव्यजनम्

### वि.२४.१८८

मयूरव्यजनस्य दण्डायामं पूर्ववद्विचित्रितं युक्त्या कृत्वा पिञ्छैः छन्नं छन्नं कृत्वा यथाशोभं यथायोगं कारयेत्।

## ६.३.५४ क्षौमादिव्यजनम्

### वि.२४.१८८

क्षौमादिव्यजनविस्तारायामं चतुर्विंशतिषोडशद्वादशाष्टाङ्गुलं समवृत्तं वेणुना कृत्वा क्षौमाद्यैर्वेष्टयित्वा दण्डायामं त्रिगुणं यथार्हं नाहं कृत्वा दण्डाग्रे संयोज्य नानातन्तुभिर्विचित्रितं कारयेत्।

## ६.३.५५ शिबिका

### वि.२४.१८८

शिबिकाविस्तारद्वि(त्रि) गुणं कूटोत्सेधं तद्द्विधा कृत्वैकांशं पादायामं एकांशं शिखरं युक्त्या संयोज्य सुवर्णेन बर्हिपिञ्छैर्वा सञ्छादयेत्।

### प्र.२०. २३ - ३१

अतः परं प्रवक्ष्यामि शिबिकानां तु लक्षणम्।।

मात्राङ्गुलेन वा कुर्याच्छिबिकादीन्विधानतः।
आवृतं तदर्धविस्तारमुत्तमं तु विधीयते।।

तत् षडङ्गुलहीनन्तु मध्यमं तु प्रकीर्तितम्।
विस्ताराध्यर्धपादेन आयामद्विगुणं भवेत्।।

उत्तमाधममध्यानां शिबिकाविस्तरो भवेत्।
त्रिभागैकस्य भागं स्याच्चतुर्भागैकभागकम्।।

पञ्चभागैकभागं स्याद्विस्तारस्य घनं भवेत्।
तच्चतुर्भागमेवं स्यादेकैकं वमनं भवेत्।।

शेषभागं तु पद्मोक्तं तलायुक्ति विशेषतः।
शिबिकाविस्तृतं चैवं भागैकं भागमेव च।।

तच्चतुर्भागमेवोक्तं भित्त्युत्सेधं विधीयते।
द्वितलं त्रितलं चैव गुलिकाफलका भवेत्।।

गुलिकापादतलोत्सेधं मध्योर्ध्वतलवत्समम्।
चतुर्भागैकमेवन्तु नवभागैकमेव वा।।
अङ्गुलं चाङ्गुलार्धं च ऊर्ध्वपट्ट्या च संयुतम्।

### ६.३.५६ खट्वा

**वि.२४. १८९**

खट्वाविस्तारं दन्तैर्दारुसारैर्वा चतुर्विंशतिविंशतिषोडशद्वादशाङ्गुलम्, अर्धाधिकपादोनद्विगुणं, द्विगुणं वा, आयामविस्तारार्धं पादोत्सेधं, तत्समं नाहं, चतुर्भिः षड्भिः अष्टभिर्वा पादैर्युक्तं, सिंहव्यालगजाकारैर्युक्तम् ईलिकाविस्तारं रसाङ्गुलं, तदर्धं बहलं, तत्तारं त्रेधा कृत्वा मध्ये पट्टिकां, तद्बाह्ये पोताकृतिं कारयेत्, ऊर्ध्वतोऽधस्ताच्च गुलिकाद्यैरुपशोभितभित्तिकम्, अभ्यन्तरे चाधारमायसं सुषिकानाराचं संयोजयेत्, त्र्यङ्गुलविस्तारां यथार्हायामां कक्ष्यां कार्पासतन्तुना कृत्वा खट्वामावेष्टयेत्। खट्वायामविस्तारसमं,

दशाष्टषडङ्गुलोत्सेधम्, अण्डजाद्यैः क्षौमाद्यैर्वा संपूर्णं वा कारयेत्।

**प्र.२०. ३६, ३७**

शयनं संप्रकल्प्यैव पूर्वोक्तेनैव दारुणा।।

सर्वालङ्कारसंयुक्तं सर्वसौन्दर्यसंयुतम्।
शिल्पशास्त्रोक्तमार्गेण शिल्पिभिः कारयेद्बुधः।।

### ६.३.५७ उपधानम्

**वि.२४. १८९**

उपधानं त्रिंशदङ्गुलविष्कम्भं, त्रिगुणपरिणाहं, यथोचितायामं, पादोपधानं हस्तोपधानं युक्त्या कृत्वा युगपादं द्वादशद्वयाङ्गुलोत्सेधम्, अष्टाङ्गुलविष्कंभं, पालिकाकारवत्कृत्वा संयोजयेत्।।

### ६.३.५८ रथः

**वि.२४. १८८, १८९**

'रथलक्षणं पञ्चसप्तनवैकादशतालविस्तारायामं तद्द्विगुणोत्सेधं मंटपाकारं कूटाकारं वा, रथायामत्रिगुणमाधारं, चक्रस्यायामविस्तारं उत्सेधार्धं, समवृत्तं, स्थलस्यालङ्कारं शिबिकालङ्कारवत् कारयेत्, आधारे पूर्वापरस्थलं कृत्वा पूर्वे मुकुलं नालं च संयोज्य रथोत्सेधं पञ्चधा कृत्वा सार्धांशमधिष्ठानं, कुमुदकुम्भपट्टिकाद्यैरुपशोभितं,शिबिकावदलङ्कारैर्युक्तं, द्व्यंशपादं, सार्धांशं शिखरं कारयेत्, अत्रानुक्तं सर्वं रङ्गडोलादीनि च शिल्पशास्त्रोक्तविधिना कारयेत्।।'

**प्र.२०. ३१ - ३६**

अतः परं प्रवक्ष्यामि रथादीनां विधिक्रमम्।।

पञ्चषट्सप्ततालं वा चाष्टतालमथापि वा।
विस्तारायममेवं स्यादुत्सेधं द्विगुणं भवेत्।।

मण्डपद्वारयुक्तं वा कूटाकारमथापि वा।
अधराधरमायामं रथायामत्रयं भवेत्।।

छत्रस्यायामविस्तारादुत्सेदार्धप्रमाणतः।
एवं तु परिकल्प्यैव शिबिकायाममुच्यते।।

रथायामसमं वाऽपि पादहीनमथार्थकम्।
विस्तारं तत्त्रिभागैकमायामं चोच्छ्रयं भवेत्।।

विस्तारार्धसमुत्सेधं विस्तारार्थाधिकायुतम्।

**नि.२७**

अथातः संप्रवक्ष्यामि रथादीनां तु लक्षणम्।
वेदनेमिसमायुक्तं बाणचक्रैरथापि वा।।

शुद्धमानसमं वापि पादाधिकमथापि वा।
पादोनं वापि कर्तव्यं त्रिभागैकेनमेव वा?।।

अध्यर्धं च त्रिपादं च द्विगुणं चेति सप्तधा।
त्रिवितस्तिसमारभ्य षडङ्गुलविवर्धनात्।।

नन्दपङ्क्तिवितस्त्यन्तं क्रमशः कल्पयेत्सुधीः।

समाश्रमायताश्रं वा भक्तिमानेन वर्धयेत्।।

एकद्वित्रिचतुर्भक्त्या चाधिकयायतमानकम्।
तद्वितस्त्यङ्गुलैरेवमायादीन् माचरेत्(?)।।

तद्धारबाह्यमानं त? भारमध्यमयोपि वा।
नेम्यन्तरप्रमाणं स्यात् अक्षायामं तु कारयेत्।।

विस्तारं त्रिगुणं चैव पादाधिकसमायतम्।
पादोनत्रिगुणं वापि वियते चाष्टभाटिते।।

भारायाममथोद्दिष्टं सममानमितीरितम्।
गुणवेदबाणमात्रं स्याद्वेदबाणरसाङ्गुलैः।।

तद्भागस्य घनोत्सेधं भारायामं तु तत्समम्।
हस्तायामं त्रिभागं वा रेतिका? कारवद्भवेत्।।

तद्धटाङ्घ्रि यथायोगं यथाचलमथाचरेत्।
तद्विविखदयस्ताभि द्वै? क्षं (द)ण्डं सुयोजयेत्।।

अक्षयोरन्तरं तत्र नेमितारमुदीरितम्।
पादोनं वा त्रिपादोनमक्षवृत्तभ्रमीकृतम्।।

षट्सप्तवसुनन्दैध मङ्गुलेर्नाभिविस्तृतम्।
तदर्धं तु घनं प्रोक्तं त्रिचतुर्भागहीनकम्।।

त्रिचतुर्भागे चैकेन नाभिमध्ये धुषिर्भवेत्।
आघारस्त? फलाकाष्ठ? द्विविधं च समीरितम्।।

तस्यान्तर्मध्यभारं च घनोत्सेधादि पूर्ववत्।
विस्तारार्धोदयं प्रोक्तं चतुर्भागं त्रिभागिकम्।।

पञ्चभागं त्रिभागं वा चतुर्भागं विधीयते।
----- माधिक्यं हीनं वापि तलान्तरम्।।

नानाधिष्ठानसंयुक्तं नानाविन्यासशोभितम्।
उपपीठसमायुक्तं कुर्यात्प्रासादरूपवत्।।

नरवन्नारिपत्रैश्च सिद्धविधाधरान्वितम्।
नागकादि समायुक्तं भूतं वा ल्लल्ल।।

-- ध्ये तु सोपानं पूर्वे मण्ड--वत्सुधीः।
मध्यभूरगृहैश्चैव? क्इमलां चेति वक्रकम्।।

रथाग्रे गरुडं प्रोक्तं सो -------------।

## ६.३.५९ भेरिका

### वि.२४. १९०,१९१

भेरिकां शुभैर्वृक्षैः, चतुस्तालमायामं, तत्पादोनद्विगुणं द्विगुणार्धं वा परिणाहं मुखतारं, द्वादशत्रयोदशचतुर्दशाङ्गुलं सुवृत्तं, अर्धाङ्गुलबाहलम्, उभे मुखे चायसपट्टेन बन्धयित्वा नव सप्त वा कीलान् संयोज्य अग्रमूलं वामदक्षिणं च स्मृत्वा चन्द्रादित्यौ मुखद्वये वरुणं वलये वरुणं चर्मणि प्रजापतिं प्रहरणे अश्विनौ शब्दे ब्रह्माणं वा ; ध्रायां नागान् कीलेषु सप्तर्षीन् नवग्रहान् वा भेरिकायां भूतीशं स्मृत्वा एवं कारयेत्।

### ६.३.६० कर्त्रिकाफलका

#### वि.२४.१९१

कर्त्रिकाफलकायामम् अष्टादशाङ्गुलैर्वर्तुलं भ्रमीकृत्य अर्धं त्यक्त्वा अर्धं सङ्गृह्य अर्धचन्द्राकारस्य मध्ये रसाङ्गुलेन सुवृत्तं भ्रमीकृत्य तन्मध्ये तद्विस्तारोत्सेधभित्तियुतं गर्त(वा) कृत्वा पार्श्वयोरुभयोस्त्र्यङ्गुलविस्तृतां व्यङ्गुलबाहुल्यां पट्टिकां पुष्पवल्लियुतां कारयेत् ; तद्गर्तभित्तिबाह्यं यवद्वयं तदग्रद्वये मकरास्यं तत्पृष्ठे द्वादशाङ्गुलायामं द्विवक्त्रम् अष्टाङ्गुलपरिणाहम्, अश्वपादवत् एकमङ्घ्रिं कृत्वा संयोज्य शेषं युक्त्यैव कारयेत्।

### ६.३.६१ उलूखलम्

#### वि.२४.१९१

उलूखलस्यार्जुनजम्ब्वाद्यैश्शुभैर्वृक्षैः मानाङ्गुलेन चतुर्विंशत्यङ्गुलं षोडशाङ्गुलायामं तत्त्रिगुणं नाहम् आयामार्धं पञ्चभागं, त्रिभागं द्विभागम् एकभागं वा गर्तम्, उत्सेधं पञ्चधा कृत्वा द्विभागं पादम्, ओष्ठविस्तारं षट्पञ्चचतुरङ्गुलं शेषं गर्तम्, एवं कारयेत्।

### ६.३.६२ मुसलम्

#### वि.२४.१९२

खादिराद्यैर्वृक्षसारैः मात्राङ्गुलेन अष्टनवदशतालायामं द्वादशाङ्गुलपरिणाहम्, अवक्रं निर्व्रणं कृत्वा ऊर्ध्वाधश्चतुरङ्गुलमात्रेण अयः पट्टमचलं संयोजयेत्, एवं मुसलं कारयेत्।

## ६.३.६३ दात्रम्

### वि.२४.१९२

दात्रायामं षोडशाङ्गुलं द्विमात्रविस्तारं यवबाहुल्यमास्यं सुतीक्ष्णं दारुणा मुष्टिं द्वादशाङ्गुलं तदर्धपरिणाहं कृत्वा संयोज्य अयःपट्टेन सुदृढं बन्धयेत्।

## ६.३.६४ खनित्रम्

### वि.२४.१९२

खनित्रायामं त्रिपञ्चाङ्गुलमेकवक्रं त्रिमात्रविस्तारम् आस्यतारं चतुरङ्गुलं पञ्चाङ्गुलं वा तस्य मूलं सुषिरं त्र्यङ्गुलविष्कम्भं दारुणा मुष्टिं चतुस्तालमानेन कारयेत्।

## ६.३.६५ पेषणी

### वि.२४.१९२

पेषणीं शिलामयीं चतुर्विंशतिविंशतिषोडशाङ्गुलायामां तदर्धविस्तारां त्रिपादविस्तारां वा विस्तारार्धसमोत्सेधां तदुत्सेधं सप्तधा कृत्वा त्र्यंशं पादं चतुर्भागम् ऊर्ध्वपट्टिकाम्; ऊर्ध्वपेषण्यायामं तद्विस्तारसमं नाहम् आयामात् पादाधिकं षड्भागैकं मुष्टिं शेषं युक्त्यैव कारयेत्।

## ६.३.६६ यन्त्रिका

### वि.२४.१९२

यन्त्रिकाम् अयसा मध्यमाङ्गुलिपरिणाहां द्विवक्रां कृत्वा तन्मूले मुकुळं, वलयं वा, युक्त्या कारयेत्।

### ६.३.६७ यवनिका

**वि.२४.१८५**

यवनिकां द्वारविस्तारसमविस्तारां तदर्धायामां श्वेतवस्त्रेण कारयेत्।

**प्र.१९.९०**

--------------- प्रच्छन्नपटमुच्यते।

क्षौमकार्पाससंयुक्तं द्वारमानं तु कारयेत्।।

### ६.३.६८ तरङ्गः

**वि.२४.१८६**

तरङ्गं क्षौमपट्टदुकूलपटकार्पासैर्वा द्वादशहस्तायतैः पञ्चभिः द्वादशभिः नवभिर्वा नवाम्बरैर्युक्तम्, आस्यरज्वा समायुक्तं नानारूपान्वितं श्वेतं वा कारयेत्।

### ६.३.६९ स्तम्भवेष्टनम्

**वि.२४.१८६**

स्तम्भवेष्टनं तत्स्तम्भायामसमं, तदर्धविस्तारं क्षौमाद्यैः कारयेत्।

### ६.३.७० वितानः

**वि.२४.१८६**

वितानं तत्पङ्क्त्यायामविस्तारसमं नानारूपान्वितं कारयेत्।

## ६.३.७१ ध्वजः

### वि.२४.१८६

ध्वजं त्रिपञ्चसप्ताष्टदशद्वादशकरायतं, षट्पञ्चचतुस्त्रितालविस्तारं, श्वेतपीत-श्यामरक्ताभं, हस्तमात्रायामशिखरं, हस्तायामैर्द्वित्रिपादैस्संयुक्तं, तिर्यग्वेत्रद्वययुतं, घण्टासहितं, तद्द्विगुणायतयष्टिसंयुक्तं कारयेत्।

## ६.३.७२ पताका

### वि.२४.१८६

पताकां तथैव विंशत्यङ्गुलविस्तारां त्रिंशदङ्गुलायतां क्षुद्रध्वजपञ्चाङ्गुलविस्तारं, द्वादशाङ्गुलायतवेत्रद्वययुतम्, अन्यत्पूर्ववत्[1]। शिखरे रज्जुयुक्तं कारयेत्।

## ६.३.७३ संक्षेपतः पात्रपरिच्छदादि संस्कारः

### वि.२५.१९३

अथ पात्रपरिच्छदादीनां संस्कारं वक्ष्ये- यजमानानुकूले शुभे नक्षत्रे देवेशं प्रणम्य, अङ्कुरानर्पयित्वा, आलयाभिमुखे चौपासनाग्निकुण्डं कृत्वा, आघारं हुत्वा अग्नेः पश्चिमतो देवेशं संस्थाप्य सप्तविंशतिविग्रहैरभ्यर्च्य देवाभिमुखे धान्यस्थण्डिलं कृत्वा, नववस्त्राण्यास्तीर्य पात्रादीनि पञ्चगव्येन प्रोक्ष्य, प्रक्षाल्य, अभ्युक्ष्य, स्थण्डिले सन्यस्य वास्तुहोमं हुत्वा, पर्यग्निं च कारयेत् ; अग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं, पुरुषसूक्तं, तत्तदधिदेवत्यं मूर्तिमन्त्रं च जुहुयात् ; तत्तदधिपान्, देवेशं च, पात्रादिषु समावाह्य अभ्यर्च्य पुण्याहं

---

1. ध्वजवदित्यर्थः

वाचयेत् ; यजमान आचार्यं सम्पूज्य दक्षिणां दद्यात्, अतो देवादीन् अष्टाक्षरं च, जपन् देवसन्निधौ तत्तत्कर्मणि संयोज्य देवमभ्यर्च्य यथाशक्ति हविर्निवेद्य ब्राह्मणान् भोजयेत्, अधिदैवते अज्ञाते सर्वत्र सेनेशमर्चयेत्। एतत्सामान्यम्।

## ६.३.७४ आभरणसंस्कारः

### वि.२५.१९३ - १९५

अथ विशेषतो वक्ष्ये - मकुटाद्याभरणजालं नानारत्नयुक्तं सुवर्णेन तत्तदङ्गानां योग्यमानेन कारयेत्। देवमभ्यर्च्य अभिमुखे सभ्याग्निकुण्डं कृत्वा आघारं हुत्वा वास्तुहोमं हुत्वा पर्यग्निं कारयेत्, पञ्चगव्येन प्रक्षाल्य सप्तकलशैः संस्नाप्य पूर्ववत् स्थण्डिलं कृत्वा नववस्त्राण्यास्तीर्य सुवर्णपात्रे तानि संन्यस्य तत्तदधिदेवान्, देवेशं च अभ्यर्च्य अग्निं परिस्तीर्य तत्तद्दैवत्यं वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, सर्वदेवत्यं च, हुत्वा स्नपनोक्तविधिना देवेशं संस्नाप्य वस्त्रमाल्यैरलङ्कृत्य पुण्याहं वाचयेत्, आचार्यं सम्पूज्य दक्षिणां दद्यात्। चतुर्दिक्षु चतुर्वेदैः स्तोत्रनृत्तगीत (जय) वाद्यैः स्तोत्रैर्जयशब्दैश्च संस्तूय आचार्यो देवेशं प्रणम्य आत्मसूक्तं जप्त्वा देवं ध्यायन् एकाक्षरादिपुरुषसूक्तं जप्त्वा 'भूतो भूते'ष्विति मकुटाद्याभरणादि तत्तत् अलङ्कृत्य आस्थानम(णृ)ण्डपे संस्थाप्य स्नपनोक्तविधिना देवेशं संस्नाप्य अभ्यर्च्य महाहविः, प्रभूतं वा, निवेद्य अर्चापीठे संस्थाप्यार्चयेत्।

### ६.३.७५ सहस्रधाराशङ्खपद्मनिधिपात्राणां संस्कारः

**वि.२५. १९४, १९५**

सहस्रधारां शङ्खपद्मनिधी च विधिना कृत्वा आलयाभिमुखे गोमयेनोपलिप्य औपासनाग्निकुण्डं कृत्वा आघारं हुत्वा अग्नेः पश्चिमतो देवं संस्थाप्याभ्यर्च्य अभिमुखे धान्यपीठं कृत्वा नववस्त्राण्यास्तीर्य पञ्चगव्येन प्रक्षाल्य सन्यस्य वास्तुहोमं हुत्वा पर्यग्निं च कृत्वा वैष्णवं, विष्णुसूक्तं सौम्यं निध्योर्मूर्तिमन्त्रं च हुत्वा पात्रे चन्द्रमण्डलं ध्यात्वा पद्मे पद्मनिधिं शङ्खे शङ्खनिधिं समभ्यर्च्य पुण्याहं वाचयित्वा अग्निं विसृजेत्, आचार्यं पूजयित्वा दक्षिणां दद्यात्, देवेशं संस्नाप्य अष्टोपचारैरभ्यर्च्य वस्त्रमाल्यगन्धाद्यैरलङ्कृत्य नृत्तगेयवाद्यैः स्तोत्रैर्जयशब्दैश्च घोषयित्वा आचार्यः प्राङ्मुख उदङ्मुखो वा स्थित्वा हस्ताभ्यां पद्ममुद्धृत्य मकुटोपरि धारयन् शङ्खपद्माख्यपात्रस्थजलं सहस्रधारापात्रस्थपद्मे समर्पयेत्, वसोः पवित्रं, पुरुषसूक्तं वा, समुच्चार्याभिषिच्य पश्चादाचमनं दत्वा प्लोतेन विमृज्य अभ्यर्च्य हविर्निवेद्य नित्यनैमित्तिकादिष्वेवं कारयेत्, एतत् स्नपनं सर्वदोषोपशमनं सर्वसम्पत्करमिति विज्ञायते।

### ६.३.७६ नीराजनपात्रसंस्कारः

**वि.२५.१९५, १९६**

नीराजनपात्रं कृत्वा [1]पूर्ववत् संस्कृत्य तत्पात्रे तदाधारे घृतेन, तैलेन वा,

---

1.सहस्रधारापात्रादिवदित्यर्थः।

पिचुवर्त्तियुतं दीपं शुभ्राज्योति (वै.म.६)रिति सन्दीप्य दिक्पिण्डार्थं हरिद्राचूर्णितेनान्नेन दशपिण्डान्, पञ्चपिण्डान्वा, मुष्टिमात्रं दृढतरं कृत्वा अलाभे अक्षतं पुष्पं वा गन्धद्रव्यं च पृथक्पात्रे सङ्गृह्य देवेशं सम्पूज्य शङ्खध्वनियुतं सर्ववाद्यैः, स्तोत्रैः, स्वस्तिघोषैः, सह यजमानो, देवदासी वा, तत्पात्रं शिरसा धृत्वा शनैश्शनैर्गत्वा आलयं प्रविश्य अभिमुखे संस्थापयेत् ; आचार्यः पात्रे चन्द्रं दीपे श्रियं चाभ्यर्च्य देवस्य पादयोः पुष्पाञ्जलिं दत्वा तत्काले शङ्खनादसमन्वितं, नृत्तगेयवाद्यैर्युक्तं 'श्रिये जात' (ऋ.सं.७-४-४) इति बिम्बस्य मूर्धादिपादपर्यन्तं प्रणवाकारं त्रिः प्रदक्षिणं कारयित्वा पूर्वस्थाने न्यस्य देवेशं प्रणम्य 'अतो देवा' (ऋ.सं.१-२-७.) दिना प्रागादिदिक्पिण्डान् विसृज्य पाद्याचमनं दत्वा तद्विप्रासः (ऋ.स.१-२-७) 'इमे गन्धा' (वै.म.प्र.६) इति गन्धेनोर्ध्वपुण्ड्रं कृत्वा अष्टाक्षरेण पुष्पाञ्जलिं दद्यात् ; पूर्ववत्तमाहृत्य आलयाद्बहिर्गत्वा भूतपीठस्य दक्षिणपार्श्वे निक्षिपेत् ; एवं साये प्रच्छन्नपटोद्धरणे च उत्सवे स्नपने बल्युत्सवे च अन्येषु पुण्यर्क्षेषु अर्चनान्ते कारयेत्।

### ६.३.७७ पादुकासंस्कारः

**वि.२५.१९६**

अवटे जलद्रोण्यां वा वरुणमभ्यर्च्य जलाधिवासं कृत्वा पूर्ववदौपासनाग्निकुण्डं कृत्वा आघारं हुत्वा आस्थानमण्टपे धान्यराशौ वस्त्रोपरि पादुके सन्यस्य वास्तुहोमं हुत्वा पर्यग्निं च कारयेत् ; शुद्ध्यर्थं प्रोक्षणैः प्रोक्ष्य, पुण्याहं

कृत्वा, अग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं, शैषिकं च हुत्वा अग्निं विसृजेत् ; आचार्यदक्षिणां दद्यात्। सर्वालङ्कारसंयुक्तं स्वस्तिसूक्तेन आलयं प्रदक्षिणीकृत्य देवाभिमुखे सन्यस्य तयोर्मध्ये शेषमभ्यर्च्य विष्णुसूक्तेन देवस्य पादयोस्संयोज्य ततो देवं सप्तविंशतिविग्रहैरभ्यर्च्य महाहविः प्रभूतं वा, निवेदयेत्, ततः प्रभृति विष्णोरुत्सवकाले शिरसा धारयन् अग्रतो गच्छेत्, शिबिकायां, हस्ते वा समारोप्य नयेदिति केचित्, नित्यं बल्यन्ते बलिबेरपीठे सन्यस्य पाद्याद्यर्घ्यान्तं पूजयित्वा अभिमुखे पादुके सन्यस्य पूर्ववच्छेषमभ्यर्च्य पादुके संयोज्य, देवेन सहाभ्यन्तरं प्रविश्य गर्भागारे सन्यसेत्।

## ६.३.७८ वाहनादीनां संस्कारः

### वि.२५.१९७

पञ्चगव्यैस्संशोध्य वास्तुहोमं हुत्वा पर्यग्निं कारयेत् ; औपासनाग्निकुण्डं कृत्वा कुम्भं संसाध्य तत्तदधिदैवं, देवेशं च, ध्यात्वा आवाह्य सप्तभिः कलशैः संस्नाप्य मण्टपे, प्रपायां वा, धान्ये स्थण्डिलं कृत्वा नववस्त्राण्यास्तीर्य उपरि सन्यस्य नववस्त्राद्यैराच्छाद्य पुण्याहं वाचयेत् ; अग्निं परिषिच्य वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, तत्तदधिदेवत्यं, मूर्तिमन्त्रांश्च व्याहृत्यन्तं हुत्वा अग्निं विसृजेत्, आचार्यं पूजयित्वा दक्षिणां दद्यात् ; देवेशं प्रणम्य आचार्यः समाहितो देवं ध्यायन्, वाहनेषु गरुडं, शयनेषु शेषं, आसनेषु शिवादीन्, अन्येषु तत्तदधिदेवानावाह्य अभ्यर्च्य देवेशं प्रणम्य शकुनसूक्तेन देवमादाय 'भूरसि भू' (वै.म.प्र.६)रित्यादिना शयनादिषु प्रतिष्ठाप्य 'प्रतद्विष्णु'(ऋ.स.२-२-२४)रिति पुष्पाञ्जलिं दत्वा देवेशं प्रणम्य अर्घ्यान्तमभ्यर्च्यालङ्कृत्य

शकुनसूक्तं समुच्चार्य सर्वालङ्कारसंयुक्तं ग्राममालयं वा प्रदक्षिणं कृत्वा कारयित्वा आस्थानमण्टपे संस्थाप्य नृत्तगीतवाद्यैर्विनोदं कारयेत् ; शुद्धस्नपनविधिना संस्नाप्य अभ्यर्च्य महाहविः, प्रभूतं वा निवेद्य अर्चास्थाने संस्थाप्यार्चयेदित्याह मरीचिः।

## क्रि.२८.१३ - २२

शयनासनयानानां संस्कारं च वदाम्यहम्।
शय्यां खट्वासने पीठे रथरङ्गं तथैव च।।

शिबिकां चैव यानानि तानि कृत्वा यथाविधि।
औपासनाग्निमाधाय वास्तुहोमं यजेत्ततः।।

पर्यग्निपञ्चगव्याभ्यां शोधयित्वा तु [1]पूर्ववत्।
धर्मं ज्ञानमथैश्वर्यं वैराग्यमिति वै पृथक्।।

शयनासनयानानां पादानामधिदेवताः।
शयनाधिपतिः शेषो धर्म एवासनाधिपः।।

यानानामपि सर्वेषां गरुडस्त्वधिदेवता।
कुम्भे तु साधिते सम्यक् ध्यात्वा वै तत्तदीश्वरान्।।

संस्नाप्य सप्तकलशैः धान्योपरि निवेश्य च।
बद्ध्वा प्रतिसरं पादे पूर्वस्मिन्नेव दक्षिणे।।

---

1. पात्रसंस्कारे उक्तवत्।

तांस्तान् देवान् समावाह्य हौत्रकर्मावसानके।
आवाहनक्रमेणाज्यं निरूप्याज्याहुतीर्यजेत्।।

तत्तद्दैवत्यमन्त्रांस्तु शतमष्टोत्तरं यजेत्।
तत्तन्मूर्तिभिरावाह्य तत्तत्प्रोक्ताधिदेवताः।।

अष्टोपचारैरभ्यर्च्य देवमारोपयेत्पुनः।
अर्चयेदासने याने कुर्याद्धामप्रदक्षिणम्।।

शयने शाययेदेवं पूजयेद्वा यथाविधि।
अन्यानि सर्वपात्राणि शोधयेच्च यथोचितम्।।

# ४. अर्चनोपकरणदानादिफलम्

## ६.४.१ स्वर्णविमाननिर्माणफलम्

### प्र.३५.२८४

विमानं हैमसंछन्नं विष्णोर्यः कारयेन्नरः।
अशक्यं तत्फलं वक्तुं सर्वैरपि सुरासुरैः।।

## ६.४.२ सुवर्णविष्णुबिम्बनिर्माणफलम्

### प्र.३५.२८५

सौवर्णं विष्णुरूपं तु यो भक्त्यैव तु कारयेत्।
तस्यापि यत्फलं सर्वमनन्तमिति नः श्रुतम्।।

## ६.४.३ बिम्बे भगवत्सान्निध्यकारणम्

### प्र.३५.३०२ - ३०४

अष्टाङ्गयोगमार्गेण मनसा भावयन् हरिम्।।

संचिन्त्य मनसा पूर्वं पूतकायो महामनाः।
यः कुर्यात्पूजनं विष्णोस्तत्र देवो वसेद् ध्रुवम्।।

अर्चकस्य तपोयोगात् पूजायाश्चातिशायनात्।
आभिरूप्याच्च बिम्बस्य सन्निधिः प्रोच्यते हरेः।।

### ६.४.४ प्रदक्षिणादिफलम्

**प्र.३५.२९९ - ३०१**

अथार्चने फलं वक्ष्ये विशेषेण मधुद्विषः।।

भक्त्या प्रदक्षिणं कुर्वन् नित्यं विष्ण्वालये नरः।
सायं प्रातश्च देवेशं नमस्यन्नथ चिन्तयन्।।

यः प्रणामं मुहुः कुर्यात् स तु यज्ञफलं लभेत्।

### ६.४.५ आलयाभ्युक्षणफलम्

**प्र.३५.३४, ३५**

उदकाभ्युक्षणं विष्णोर्यः करोति सदा गृहे।।

सोऽपि गच्छति यत्रास्ते भगवान् यादसां पतिः।

### ६.४.६ आलयानुलेपनफलम्

**प्र.३५.३५ - ५४**

मृदा धातुविकारैर्वा वर्णकैर्गोमयेन वा।।

विष्णोरायतने नित्यं यः करोत्यनुलेपनम्।
प्रवाते वाति गुणवद्वर्षास्वतिमनोहरम्।।

स्वानुलिप्तं शुभाकारं स्वगृहं लभते नरः।
पूर्णधान्यहिरण्यादिमणिमुक्ताफलोज्ज्वलम्।।

प्रत्यासन्नजलोपेतं गृहं प्राप्नोति शोभनम्।
सामन्तस्वजनानां च सर्वेषामुत्तमोत्तमम्।।

तदाप्नोति गृहं रम्यमुपलेपनकृन्नरः।
येनानुलिप्ते तिष्ठन्ति विष्ण्वायतनभूतले।।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रास्साध्व्यस्त्रियस्तथा।
तस्य पुण्यफलं वक्तुं नालं देवास्सहानुगाः।।

अप्सरोगणसङ्कीर्णं मुक्ताहारशतोज्ज्वलम्।
श्रेष्ठं सर्वविमानानां स्वर्गधिष्ण्यमवाप्नुयात्।।

यावन्तस्तिथयो लिप्ताः दिव्याब्दांस्तावतो नरः।
तस्मिन्विमाने स नरः स्त्री वा तिष्ठति शोभने।।

स्रगन्धवस्त्रसंयुक्तस्सर्वभूषणभूषितः।
गन्धर्वाप्सरसां सङ्घैः पूज्यमानस्स तिष्ठति।।

लिप्ता च यावदाहस्ता विष्णोरायतने मही।
तावद्योजनविस्तीर्णस्वर्गस्थानाधिपो भवेत्।।

पूज्यमानैस्सुरगणैश्शीतोष्णादिविवर्जितः।
मनोज्ञगात्रो विप्रेन्द्रैस्तिष्ठत्या भूतसंप्लवम्।।

तत्क्षयादिह चागत्य विशिष्टे जायते कुले।
अत्युत्कृष्टगृहं प्राप्य मर्त्यलोकेऽभिवाञ्छितम्।।

न तत्र तावद्दारिद्र्यं नोपसर्गो न वा कलिः।
न तावन्मृतनिष्क्रान्तिर्यावज्जीवन्ति साक्षिणः।।

विष्णुस्समस्तभूतानि ससर्जैतानि यानि वै।
तेषां मध्ये जगद्धातुरतीवेष्टा वसुन्धरा।।

कृते सम्मार्जने तस्यास्तथा चैवानुलेपने।

प्रयाति परमं तोषं विष्णुर्भूर्वैष्णवी यतः।।

उपोषितो नरो नारी यः करोत्यनुलेपनम्।
न तस्य जायते भङ्गो गार्हस्थ्ये तु कदाचन।।

या च नारी करोत्येवं यथावदनुलेपनम्।
नाप्नोति सापि वैधव्यं गृहभङ्गं कदाचन।।

सर्वाभरणसम्पूर्णः सर्वोपस्करधान्यवान्।
गोमहिष्यादिसंभागं गृहमाप्नोति मानवः।।

तस्मादभीप्सता सम्यग्गार्हस्थ्यं तदखण्डितम्।
विष्णोरायतने कार्यं सहसैवोपलेपनम्।।

यश्चानुलेपनं कुर्यात् विष्णोरायतने नरः।
सोपि लोकं समासाद्य मोदते वै शतक्रतोः।।

## ६.४.७ पुष्पप्रकिरणफलम्

**प्र.३५.५५**

पुष्पप्रकीर्णमत्यर्थं सुगन्धं केशवालये।
उपलिप्ते नरो दत्वा न दुर्गतिमवाप्नुयात्।।

## ६.४.८ घण्टासमर्पणफलम्

**प्र.३५.२९०, २९१**

यश्च कांस्यमयीं घण्टां हृद्यध्वनियुतां ददेत्।।

हृद्यवाक् सुस्वरो हृद्यो वाग्मी स तु भवेन्नरः।

### ६.४.९ ध्यानावाहनफलम्

**प्र.३५.३०१, ३०२**

उपचारविशेषाणामर्पणाद्वक्ष्यते फलम्।।

ध्यानमावाहनं कृत्वा सर्वान् कामानवाप्नुयात्।

### ६.४.१० आसनोपचारसमर्पणफलम्

**प्र.३५.३०५**

आसनं हरये दत्त्वा प्रतिष्ठां लभते परम्।

### ६.४.११ स्वागताद्युपचारसमर्पणफलम्

**प्र.३५.३०५, ३०६**

स्वागतेनानुमानेन यः पूजयति माधवम्।।

सर्वैरनुमतो भूत्वा स्वागतं सोऽभिपद्यते।

### ६.४.१२ पाद्याचमनोपचारसमर्पणफलम्

**प्र.३५.३०६, ३०७**

पाद्यमाचमनीयं च समर्प्य हरये नरः।।

बाह्यमाभ्यन्तरं यत्तु पापं तेन विमुच्यते।

### ६.४.१३ एलादिसमर्पणफलम्

**प्र.३५.५८**

एलाकर्पूरताम्बूलतैलादिस्पर्शनात्सुखी।

परत्रेह च लोके स्यात् दीर्घकालमसंशयः।।

## ६.४.१४ अर्घ्यसमर्पणफलम्

**प्र.३५.३४८**

विधिनार्घ्यं हरेर्दद्याद् अष्टाङ्गं भक्तितो नरः।
चन्द्रलोकं स गत्वैव याति विष्णोः परं पदम्।।

## ६.४.१५ स्नानपानोदकदानफलम्

**प्र.३५.५६**

स्नानपानाम्भसां विष्णोः प्रदानात्तत्सलोकभाक्।

## ६.४.१६ स्नानीयतोयसमर्पणफलम्

**प्र.३५.३४९, ३५०**

सुगन्धि शुभमुत्पूतं स्नानतोयं च यो ददेत्।
देवशस्य विशेषेण स भवेद्वीतकल्मषः।।

ततश्च वारुणं लोकं प्राप्य तत्रैव मोदते।

## ६.४.१७ स्नानीयद्रव्यदानफलम्

**प्र.३५.५६**

स्नानीयद्रव्यदानेन नीरोगः प्रेत्य मोदते।।

## ६.४.१८ क्षीरस्नापनफलम्

**प्र.३५.५९ - ६५**

सर्वयज्ञमयो विष्णुः गव्यानां परमस्स्मृतः।

जायते येषु लोकेषु पुलकस्संगमो महान्।। ?

येषु क्षीरवहा नद्यः ह्रदाः पायसकर्दमाः।
तान् लोकान् पुरुषा यान्ति क्षीरस्नानकरा हरेः।।

आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चारुरूपतम्।
सप्तजन्मन्यवाप्नोति क्षीरस्नानकरो हरेः।।

दध्यादीनां विकाराणां क्षीरतस्संभवो यथा।
तथैवाशेषकामानां क्षीरस्नापनतो हरेः।।

यथा च विमलं क्षीरं यथा निर्वृतिकारकम्।
तथास्य विमलं ज्ञानं भवत्यतिफलप्रदम्।।

ग्रहानुकूलतां पुष्टिं प्रियं चाप्यखिले जने।
करोति भगवान् विष्णुः क्षीरस्नापनतोषितः।।

सर्वोऽस्य स्निग्धतामेति दृष्टिमात्रात्प्रसीदति।

## ६.४.१९ घृतस्नापनफलम्

**प्र.३५.६५ - ७२**

यः स्नापयति देवस्य घृतेन प्रतिमां हरेः।।

इन्द्रप्रस्थे द्विजाग्र्याणां स ददाति गवां शतम्।
गवां शतस्य विप्राणां न दत्तस्य भवेत् फलं।। ?

घृतप्रस्थेन तद्विष्णोः लभेत्स्नानोपयोगिनाम्।?
पुरा राजर्षिभिः प्राप्ता सप्तद्वीपा वसुन्धरा।

घृताढकेन गोविन्दप्रतिमास्नापनात्किल।
प्रतिमासं सिताष्टम्यां घृतेन जगतः पतिम्।।

स्नापयित्वा समस्तेभ्यः पापेभ्योऽपि प्रमुच्यते।
द्वादश्यां पौर्णमास्यां च गव्येन हविषा हरेः।।

स्नापनं देवदेवस्य महापातकनाशनम्।
ज्ञानतोऽज्ञानतो वापि यत्पापं कुरुते नरः।।

तत् क्षालयति सन्ध्यायां घृतेन स्नापयन् हरिम्।
घृतक्षीरेण देवेशे स्नापिते मधुसूदने।।

स गत्वा वैष्णवं धाम मोदते सूरिभिस्सह।

### ६.४.२० प्लोतवस्त्रोत्तरीयसमर्पणफलम्

**प्र.३५.३५०, ३५३**

प्लोतवस्त्रोत्तरीयाणि विशुद्धानि मृदूनि च।।

देवदेवस्य दत्त्वा तु सौम्यं लोकमवाप्नुयात्।
कार्पासमथ च क्षौमं कौशेयं राङ्कवं तथा।।

यथाशक्तिसमर्प्यैव फलं चानन्तमश्नुते।
कार्पासाद्राङ्कवं तस्मात्कौशेयं क्षौममित्यपि।।

प्रशस्तं कथितं वस्त्रं यथाशक्त्यनुरूपतः।

### ६.४.२१ क्षौमादिसमर्पणफलम्

**प्र.३५.५७**

क्षौमादिदानादाप्नोति परलोके महत्सुखम्।

### ६.४.२२ उपवीतसमर्पणफलम्

**प्र.३५.३५८**

उपवीतं तु यो दद्यात्सौवर्णैस्तन्तुभिः कृतम्।
द्विजोत्तमस्स्याद्विज्ञानी ब्रह्मलोकमवाप्नुयात्।।

### ६.४.२३ सालग्राममालासमर्पणफलम्

**प्र.३५.३५९**

सालग्रामैश्च बहुभिः निर्मितां मालिकां तु यः।
अर्पयेद्देवदेवस्य स विष्णोर्याति सन्निधिम्।।

### ६.४.२४ लक्ष्म्या हारसमर्पणफलम्

**प्र.३५.३६० - ३६२**

लक्ष्मीः प्रियतमा विष्णोः सा हि नित्यानपायिनी।
स्वसंकल्पानुविद्धा या शक्तिस्सर्वात्मिका परा।।

प्रकृतेर्मूलभूता च स्वामिनी जगतां सताम्।
लक्ष्मीप्रतिकृतिं कृत्वा मणिमुक्तादिभिर्मुदा।।

आबद्ध्य मालिकायां यो देवेशाय समर्पयेत्।
तस्य प्रसन्नौ जायेते दम्पती जगतः पती।।

### ६.४.२५ आलेपनद्रव्यसमर्पणफलम्

**प्र.३५.५७**

आलेपनद्रव्यदानात्कामानाप्नोति शाश्वतान्।।

### ६.४.२६ गन्धद्रव्यसमर्पणफलम्

**प्र.३५.७५**

गन्धद्रव्यप्रदानेन सुगन्धिर्जायते भृशम्।।

### ६.४.२७ आभरणसमर्पणफलम्

**प्र.३५.७४**

दानादाभरणदीनां तेजस्वी दिवि मोदते।

### ६.४.२८ स्वर्णाद्याभरणसमर्पणफलम्

**प्र.३५.३५३, ३५५**

सौवर्णाभरणान्यत्र मुक्तामणिकृतानि वा।
अर्पयेद्देवदेवस्य भवेद्भूमिपतिस्स हि।।

जाम्बूनदं शातकुम्भं हाटकं वैणवं तथा।
शृङ्गी च शुक्तिजं चैव जातरूपमतः परम्।।

रसविद्धं तथा प्रोक्तमाकरोद्गतमित्यपि।
प्रोक्तं बहुविधं हेम पूर्वात्पूर्वतरं वरम्।।

प्रत्युप्तानि विशेषेण रत्नैर्नानाविधैर्हरेः।
भूषणान्यर्पयेद्भक्त्या मित्राण्यस्य नवग्रहाः।।

राजश्रियं च भुक्त्वान्ते विष्णुलोकं स गच्छति।

### ६.४.२९ पुष्पमालासमर्पणफलम्

**प्र.३५.७२, ७३**

स्रजं बद्ध्वा सुमनसां यः प्रयच्छति विष्णवे।
स भुक्त्वा विपुलान् भोगान् नाकपृष्ठे विराजते।।

### ६.४.३० तुलसीपुष्पसमर्पणोपचारफलम्

**प्र.३५.३०७ - ३२०**

नित्यं पुष्पाणि पुण्यानि भक्त्या यस्तु समर्पयेत्।।

सूर्यकोटिनिभं दिव्यं विमानमधिरुह्य सः।

विष्णुलोकं गतस्सत्यं विष्णुवन्मोदते चिरम्।।

देवेशं पुष्पमालाद्यैरलङ्कुर्याच्च यो बुधः।
तस्यानन्तफलं प्रोक्तमनन्तो भगवान् हरिः।।

चम्पकाशोकपुन्नागं जातीमलयपङ्कजम्।
समर्प्य देवदेवाय शुभानामाश्रयो भवेत्।।

दमनोशीरलामञ्चकेतक्युत्पलमर्पयेत्।
मङ्गलं तस्य निश्छिद्रं भवेदेव न संशयः।।

तुलसीमर्पयेद्विद्वान् पादयोर्भक्तितो हरेः।
स चानन्तफलं प्राप्य मोदते विष्णुसन्निधौ।।

सुगन्धिपुष्पदानेन सुगन्धिर्जायते नरः।
बहुपुष्पप्रदानेन बहुधा तुष्यते हरिः।।

बहुजातिसुमानां च दानेन प्रीयते स वै।

पादयोरर्पणाद्विष्णोः पुष्पाणां संचयं सकृत्।।

पदे पदे चाश्वमेधफलं प्राप्नोत्यसंशयम्।
तुलसीं मूर्ध्नि देवस्य समर्प्य मधुविद्विषः।।

नरः पापाद्विमुच्येत कर्मणा नोपलिप्यते।
सर्वाङ्गेष्वर्पयन् पुष्पं सर्वगस्य नरो हरेः।।

सर्वदा सर्वलोकेषु कामचारो भविष्यति।
अलंकृत्य फलैर्देवं पुष्पार्पणफलं लभेत्।।

सुगन्धचन्दनद्रव्यं कर्पूरादियुतं तथा।
यथार्हमर्पयेदङ्गे श्लक्ष्णं सर्वाङ्गसुन्दरम्।।

स नरो विष्णुसालोक्यं प्रयात्यमरदुर्लभम्।
स्वयमेवाहृतैः पुष्पैः पूजयेद्यस्तु माधवम्।।

स सर्वान् समवाप्नोति पुष्पार्पणफलादिकान्।

### ६.४.३१ नवरत्नसमर्पणफलम्

**प्र.३५.७४**

दानाच्च नवरत्नानां देवसालोक्यमश्नुते।।

### ६.४.३२ उपानदादिदानफलम्

**प्र.३५.७६, ७७**

उपानहौ पादुके च वाहनं यानमेव च।

ददाति यो मन्दयित्वा(?) मणिकाञ्चनचित्रितम्।।

स विमानं तु दुष्प्रापं प्राप्नोत्येव न संशयः।

### ६.४.३३ आदर्शसमर्पणफलम्

**प्र.३५.७५**

आदर्शनप्रदानेन दृश्यस्सर्वैर्भविष्यति।

### ६.४.३४ भद्रपीठसमर्पणफलम्

**प्र.३५.७८**

अलङ्कृतं भद्रपीठं प्रयच्छन् सर्वकामभाक्।

### ६.४.३५ धूपद्रव्यसमर्पणफलम्

**प्र.३५.७६**

धूपद्रव्यप्रदानेन स्वस्थानं स्वर्गिणां भवेत्।

### ६.४.३६ धूपोपचारसमर्पणफलम्

**प्र.३५.३४३, ३४४**

चन्दनागरुकोष्ठाद्यैः धूपमाघ्रापयेच्च यः।

सूर्यलोकं स गत्वैव याति विष्णोः परं पदम्।।

### ६.४.३७ दीपसमर्पणफलम्

**प्र.३५.३४४ - ३४७**

घृतेन कापिलेनैव दृढवर्तियुतं तु यः।।

दर्शयेद्देवदेवस्य दीपं दृष्टिमनोहरम्।
सोऽन्धं नैव प्रविशति नरकं नरपुङ्गवः।।

यस्तु तैलेन सन्दीप्तं दर्शयेद्दीपमुज्ज्वलम्।
विमानमति विद्योति यात्यारुह्य तमःपरम्।।

कर्पूरदीपं यो भक्त्या दर्शयेद्धरये नरः।
तस्य पापानि नश्यन्ति निर्लेपस्स भविष्यति।।

### ६.४.३८ वाद्यसमर्पणफलम्

**प्र.३५.७९, ८०**

ध्वजं च वाद्यमुत्पाद्य विष्णुसात्कुरुते तु यः।
स दिव्यदुन्दुभिप्रायं स्थानं प्राप्य विराजते।।

### ६.४.३९ वीणावेणुध्वनिकारयितुः फलम्

**प्र.३५.२९३**

वीणावेणुनिनादैश्च शक्त्या यः पूजयेद्धरिम्।
भुक्त्वात्र महदैश्वर्यं वैष्णवं पदमाप्नुयात्।।

### ६.४.४० शङ्खभेर्यादिसमर्पणफलम्

**प्र.३५.२९१**

शङ्खभेर्यादिदानेन शक्रलोके स पूज्यते।।

### ६.४.४१ नृत्तगेयवाद्यघोषादिकारयितुः फलम्

**प्र.३५.२९२**

नृत्तगेयादिभिर्वाद्यैः घोषणं कारयेत्तु यः।

नर्तयेदप्सरोभिर्वा गान्धर्वं लोकमाप्नुयात्।।

### ६.४.४२ नृत्तगीताद्युपचारसमर्पणफलम्

**प्र.३५.८१ - ८३**

नृत्तभेदैर्गीतभेदैः तथा वाद्यैरनेकधा।।

श्रोतव्यैरपि दृश्यैश्च देवदेवस्य सन्निधौ।

आसीनमुपचारैः स्वैर्ये समाराधयन्ति ते।।

प्रेत्य दिव्येषु लोकेषु पूज्यन्ते तैर्न संशयः।

### ६.४.४३ ध्वजसमर्पणफलम्

**प्र.३५.२७६**

ध्वजान् विचित्रान् यो दद्यात् नानावर्णसमायुतान्।

सर्वेषामुत्तमो भूत्वा कुलकेतुर्भविष्यति।।

### ६.४.४४ गरुडध्वजसमर्पणफलम्

**प्र.३५.७८, ७९**

विनतानन्दनस्थानं ध्वजमुत्पाद्य दर्शयन्।।

सामीप्यं सहसा विष्णोर्याति सद्यो न संशयः।

### ६.४.४५ वितानसमर्पणफलम्

**प्र.३५.२७७, २७८**

श्वेतं वितानं रक्तं वा कृष्णं पीतं च श्यामलम्।
दुकूलेनाथ पट्टेन तन्तुनाऽन्येन वा कृतम्।।

यो दद्याद्देवदेवस्य स गच्छेद्वैष्णवं पदम्।

### ६.४.४६ आतपत्रसमर्पणफलम्

**प्र.३५.२७९, २८०**

आतपत्रं तथा हैमं मुक्तादामविभूषितम्।।

हैमदण्डयुतं दद्यादिन्द्रलोकं स गच्छति।
राज्यकामी तु राजा स्यात् सार्वभौमोऽपि जायते।।

### ६.४.४७ मयूरच्छत्रदानफलम्

**प्र.३५.२८१**

मयूरछत्रदानात्तु वारुणं लोकमाप्नुयात्।

### ६.४.४८ चामरादिसमर्पणफलम्

**प्र.३५.२८१, २८२**

चामरं हेमदण्डं च व्यजनं रत्नभूषितम्।।

केवलं हेमदण्डं वा भक्त्या शक्त्या च संयुतम्।
अर्पयेद्धरये यस्तु देवलोके महीयते।।

**प्र.३५.७३**

चामरव्यजनच्छत्रदानात्स्वाराज्यमश्नुते।।

### ६.४.४९ मयूरव्यजनसमर्पणफलम्

**प्र.३५.२८३**

मयूरव्यजनं तद्वद्रुक्मदण्डं च शक्तितः।
भक्त्यैव यो हरेर्दद्यात् वायुलोके महीयते।।

### ६.४.५० दासदास्यादिसमर्पणफलम्

**प्र.३५.८०, ८१**

दासीदासं तथात्मानम् आत्मीयं च प्रयच्छति।।

वासुदेवाय दास्येन मुक्तिः करतले स्थिता।

### ६.४.५१ रत्नमण्डपादिकरणफलम्

**प्र.३५.२८६, २८७**

मण्डपं वा प्रपां वाथ रत्नमुक्तोपशोभितम्।
हेमलम्बसमायुक्तं हैमस्तम्भपरिष्कृतम्।।

कल्पयेद्विष्णुसालोक्यं प्राप्नोत्यमरदुर्लभम्।

### ६.४.५२ स्वर्णसिंहासनसमर्पणफलम्

**प्र.३५.२८७, २८८**

हैमं सिंहासनं श्रेष्ठं यो भक्त्यैवार्पयेद्धरेः।।

सिंहासनं समास्थाय माहेन्द्रीं संपदं व्रजेत्।

### ६.४.५३ स्वर्णशिबिकादिसमर्पणफलम्

प्र.३५.२८८ - २९०

हैमीर्याशिशिबिकाश्चैव रङ्गादीत्यश्च कारयेत्।।

हैमं यानं तथारुह्य विष्णुलोकं स गच्छति।

अशक्तो दारवान्वाथ रङ्गादीन् शिबिकास्तथा।।

सिंहासनं वा यो दद्यात् सोमलोकं स गच्छति।

### ६.४.५४ हविःपात्रादिसमर्पणफलम्

प्र.३५.२७२ - २७५

हविष्पात्रादि सौवर्णं राजतं ताम्रमेव वा।।

कांस्यं वाप्यथ यो दद्यात् अर्घ्यपात्रादिकानपि।

कलशान् करकान् कुम्भान् अन्यांश्चैव परिच्छदान्।।

शक्तिलोभमकृत्वैव तस्य पुण्यफलं महत्।

सौवर्णान्येव यो दद्यात् सारूप्यं लभते फलम्।।

राजतान्यथ यो दद्यात् सामीप्यं फलमाप्नुयात्।

दद्यात्ताम्राणि कांस्यानि सालोक्यं पदमेति सः।।

### ६.४.५५ पुष्पमण्डपनिर्माणफलम्

**प्र.३५.३७७, ३७८**

देवस्य मण्डपं कुर्यात् गन्धपुष्पैः प्रपां तु वा।
सर्वैश्वर्यमवाप्यैव नित्यपुष्पफलं व्रजेत्।।

### ६.४.५६ मात्रादानफलम्

**प्र.३५.३६३**

मात्रां च देवदेवस्य दत्त्वा हस्ते विशेषतः।
सर्वान् कामानवाप्नोति चरांशस्तर्पितो हरेः।।

### ६.४.५७ मधुपर्कसमर्पणफलम्

**प्र.३५.३६४, ३६५**

मधुपर्कं हरेर्दद्यात् भक्त्या प्रीतिकरं हरेः।
विरजाम्बरसंवीतः शशाङ्कधवलो मुदा।।
चन्द्रलोकाधिपो भूत्वा यायाद्विष्णुपदं महत्।

### ६.४.५८ हविरादिनिवेदनफलम्

**प्र.३५.३६५ - ३७१**

हविर्निवेद्य देवस्य प्रतिष्ठाफलमश्नुते।।
प्रभूतं विनिवेद्यैव जीर्णोद्धारफलं तथा।
पायसं विनिवेद्यैव हरेर्भक्त्या विशेषतः।।

पयोह्रदैश्च पितरस्तृप्तिमायान्ति तस्य तु।
कृसरं विनिवेद्यैव देवस्य मुदितो नरः।।

अक्षयं प्रतिपद्येत स्वगृहेऽन्तं चिरं चिरम्।
गौल्यं निवेद्य देवस्य प्राप्नोति गुडपर्वतान्।।

मुद्गान्नस्य प्रदानेन मुद्गराशिं समाप्नुयात्।
यवोदनस्य दानेन नीरोगो भवति ध्रुवम्।।

शुद्धान्नस्य प्रदानेन त्रिशुद्धा भवति प्रजा।
अपूपादिप्रदानेन मनस्वी जायते नरः।।

उपदंशादिदानेन नोपदंशो भविष्यति ?।

**स.४५. ८६ - ९४**

आमोदश्च प्रमोदश्च सम्मोदश्च तथैव च।
वैकुण्ठश्चेति चत्वारो विष्णुलोकाः प्रकीर्तिताः।।

मौद्गिकान्नप्रदानेन लोकमामोदमाप्नुयात्।
पायसान्नप्रदानेन प्रमोदमधिगच्छति।।

कृसरान्नप्रदानेन सम्मोदं लोकमाप्नुयात्।
गौल्यस्य हविषो दानाद्वैकुण्ठं लोकमाप्नुयात्।।

यावकान्नप्रदानेन स गच्छेत् परमं पदम्।
शुद्धान्नस्य प्रदानेन विष्णुलोके महीयते।।

प्रभूतदानात् सर्वेषु विष्णुवन्मोदते चिरम्।
यावद्भिस्तण्डुलैरन्नं विष्णुवन्मोदते चिरम्।।

तावद्वर्षाणि तल्लोके विष्णुवत्स महीयते।
अपूपादीनि भक्ष्याणि कदल्याः पनसस्य च।।

भक्त्या फलानि चूतस्य देवेशाय निवेदयेत्।
ताम्बूलं मुखवासादि कर्पूरैलादिभिर्युतम्।।

सुगन्धं पुष्पमालां च वस्त्राणि विविधानि च।
द्रव्याण्यन्यानि सर्वाणि देवेशाय ददाति यः।।

यद्यत्कामेन संदद्यातत्तत्सर्वं लभेत सः।

### ६.४.५९ फलसमर्पणफलम्

**प्र.३५.३४२, ३४३ , ३७२, ३७३**

यः पूजयेत्फलैर्विष्णुं सुपक्वैरमृतोपमैः।।

पुण्यवृक्षसमुद्भूतैः तत्फलं केन वर्ण्यते।
कदल्या नारिकेलस्य चूतस्य पनसस्य च।।

फलानि च सुपक्वानि भक्त्या शुद्धानि यो ददेत्।।

हविर्दानाच्चतुर्भागं फलं सोऽपि समाप्नुयात्।

### ६.४.६० पानीयसमर्पणफलम्

**प्र.३५.३७१, ३७२**

सुगन्धि स्वादु शुद्धं च पानीयं यो हरे र्ददेत्।।

हविर्दानफलस्यार्धं फलं सम्यक् समश्नुते।

### ६.४.६१ ताम्बूल(मुखवास)समर्पणफलम्

**प्र.३५.३७४ - ३७५**

कर्पूरैलालवङ्गैश्च तथा जातीफलादिभिः।
मातुलुङ्गफलैः शुद्धैः सुपक्वैश्च युतं तथा।।

ताम्बूलं क्रमुकैर्युक्तं मुखवासं च यो ददेत्।
सर्वैश्वर्यमवाप्नोति विष्णुलोकं च गच्छति।।

### ६.४.६२ बलिदर्शनफलम्

**प्र.३५.२७७**

बलिं सेवेत यो भक्त्या सोऽपि यज्ञफलं लभेत्।

### ६.४.६३ बलिप्रदक्षिणफलम्

**प्र.३५.३७६, ३७७**

विधिना बलिमाराध्य कारयेद्यः प्रदक्षिणम्।
बलं बलवतां लब्ध्वा विष्णुलोकं स गच्छति।।

### ६.४.६४ बलिसाधनानां पटहादीनां प्रदाने फलम्

**खि.२४.१३८**

बल्यङ्गं साधनं दद्यात् यो भक्त्या पटहादिकम्।
तस्य पापं प्रणश्येद्धि तमस्सूर्योदये यथा।।

### ६.४.६५ द्रव्यसामान्यदानफलम्

**प्र.३५.२९४ - २९९**

यद्यद् द्रव्यं मुदा युक्तो दद्यात्तु हरये नरः।
तदग्रे पूजकेभ्यश्च गुरवे च विशेषतः।।

तत्प्रीत्यै चेतरेभ्यश्च ब्राह्मणेभ्यो विधानतः।
समृद्धिं तस्य तस्यैव द्रव्यस्याप्नोत्यसंशयः।।

यं कामयित्वा दद्याद्यत्तत्सर्वं स लभेन्नरः।
यद्यत्कर्म तदर्थं स्यात् परिचर्या च तस्य या।।

तस्योपचारं यत्कर्म करोति श्रद्धया तु यः।
सर्वयज्ञफलं प्राप्य सामीप्यं पदमाप्नुयात्।।

तस्मादत्र प्रतिष्ठाप्य देवदेवस्य मन्दिरम्।
शक्तिलोभमकृत्वैव विभवानां च भक्तितः।।

बहुधा बहुलां वृत्तिं कल्पयेच्चेत्तदुत्तमम्।

### ६.४.६६ खट्वासमर्पणफलम्

**प्र.३५.२७८, २७९**

सोपधानां सतल्पां च खट्वां दद्याच्च यो हरेः।।

कुबेरलोकमासाद्य तत्र सम्मोदते चिरम्।

### ६.४.६७ देवस्वापहारे दोषः

**खि.२४.१३९**

स्वदत्तं परदत्तं वा देवदेवस्य यद्धनम्।

हर्तुमिच्छति यः पापी नरके स पतेत् ध्रुवम्।।

### ६.४.६८ विष्णुकथासंकीर्तनादिफलम्

**प्र.३५.३७८, ३७९**

विष्णोः कथास्तु संकीर्त्य स्तोत्रैः स्तुत्वा च वैष्णवैः।।

श्रुत्वा भक्त्या हरिं ध्यायन् विष्णुलोके महीयते।

### ६.४.६९ भगवदर्चनाविधेः श्रवणश्रावणफलम्

**प्र.३५.३७९, ३८०**

सौम्यान् पुण्यानिमान् विष्णोश्चतुरोऽप्यर्चनाविधीन्।।

श्रावयेद्यो बुधो भक्त्या तथा यः शृणुयादपि।

सर्वपापविनिर्मुक्ता वैष्णवं पदमाप्नुयुः।।

## ५. पुष्पपत्राङ्कुरादीनि

### ६.५.१ देवपूजार्थं पुष्पावचयप्रकारः

**स.४४.३८ - ४२, ४५, ४६**

पाणी प्रक्षाल्य चाचम्य कृतशुद्धिः कृताञ्जलिः।।

पुष्पमेकं विसृज्यैव नमो वारुणमुच्चरन्।
सोमाय च महीदेव्यै तृतीयं च यथाक्रमम्।।

सर्वं पूर्वमुखो भूत्वा पुष्पं सञ्चिनुयाच्छुभम्।
शुद्धे पात्रे प्रगृह्णीयाद्वस्त्रे हस्ते न चाहरेत्।।

उत्तरीयगतं ग्राह्यं देवेष्वापदि सर्वदा।
चिन्वतः पतितं चापि पतितं ग्रन्थिबन्धने।।

सगन्धं यच्च तत्सर्वं जले प्रक्षिप्तमेव च।
-----------------------------।।

-----------------------------।
पात्रेणैव समाच्छाद्य पुष्पं वै सञ्चितं पुटे।

अन्ते च प्रक्षिपेत् पुष्पं पुष्परक्षकमुद्दिशन्।।
एवं पुष्पं समादाय देवस्यार्चनमारभेत्।

पुष्पाणि परिवाराणां पृथक् पात्रे समाहरेत्।।

**ज्ञा.७२.१३१**

**वि.४३.२९३**

भक्त आचम्य, प्रणम्य, प्रयतः पाणी प्रक्षाल्य, शुद्धे पात्रे पुष्पाण्युक्तानि ' 'देवस्य त्वा' इति गृह्णीयात्।

**वा.२८**

### ६.५.२ अर्चनार्हं श्रेष्ठं पुष्पम्

**वि.४३.२९३**

बहुवर्णमुत्तमम्। सर्वेभ्यः सौवर्णं श्रेष्ठम्। न जातु च निर्माल्यं भवेत्। तत् सदा शुद्धं पुष्पं नित्यं प्रक्षाल्य आदाय पुनः पुनरर्चयेत्।

**वा.२८ ; ज्ञा.७२.१३०**

**ज्ञा.७२.१२९**

रात्रौ संफुल्लानि तदाह्नि साद्यस्कानि तत्कालोत्फुल्लानि अर्चने श्रेष्ठानि।

### ६.५.३ वर्णसंख्याभेदेन पुष्पाणां श्रेष्ठादिभेदः

**स.४४.६, ७**

चतुर्वर्णं तथा पुष्पं चातुर्वर्ण्यविशेषतः।
श्वेतं रक्तं तथा पीतं कृष्णं चैव प्रकीर्तितम्।।

चतुर्वर्णसमायुक्तं श्रेष्ठं त्रैवर्णिकं तथा।
द्विवर्णं मध्यमं ज्ञेयं चैकवर्णं कनिष्ठकम्।।

### ६.५.४.० पुष्पाणां दैविकादिभेदेन विभागः

**स.४४.१ , २**

अतः परं प्रवक्ष्यामि ग्राह्यपुष्पसमुच्चयम्।
दैविकं मानुषं ब्राह्मं पैतृकं भौतिकं तथा।।

याक्षं गान्धर्विकं तद्वदासुरं राक्षसं तथा।
पैशाचं मिश्रकं चापि पुष्पमेवं प्रकीर्तितम्।।

**ज्ञा.७२.१२९**

### ६.५.४.१ दैविकं पुष्पम्

**ज्ञा.७२.१२९**

श्वेतपीतकृष्णरक्तचतुर्वर्णानि त्रिवर्णानि च दैविकान्युत्तमानि।

**स.४४.५, ४७**

बिल्वं च करवीरं च पद्मं कुमुदमेव च।
चत्वारि पुण्यपुष्पाणि दैविकानि समाहरेत्।।

---------------------------

हरिताहरितान्येव दैविकानि विदुर्बुधाः।

### ६.५.४.२ ब्राह्मं पुष्पम्

**स.४४.५२ - ५३**

मौकुल्यं विकसेदस्तात्तद्वेलापरिसंहतम्।।

सारं सुपात्रे सन्यस्तं ब्रह्मणः परिकीर्तितम्।

**६.५.४.३ भौतिकं पुष्पम्**

**स.४४.५०**

गृहीतपरिशीर्णं च भूतानां च विदुर्बुधाः।

**ज्ञा.७२.१३१**

**६.५.४.४ याक्षिकं पुष्पम्**

**स.४४, ४९**

छिन्नारं भिन्नमस्तिष्कं याक्षिकं परिकीर्तितम्।

**ज्ञा.७२.१३१**

**६.५.४.५ गान्धर्विकं पुष्पम्**

**स.४४.४९**

एकरात्रोषितं पुष्पं गन्धर्वाणां प्रकीर्तितम्।

**ज्ञा.७२.१३१**

**६.५.४.६ आसुरं पुष्पम्**

**स.४४.४७**

उत्पाटितानि पुष्पाणि चासुराणीति लक्षयेत्।

**ज्ञा.७२.१३१**

**६.५.४.७ राक्षसं पुष्पम्**

**स.४४.४८**

सकण्टकानां वृक्षाणां पुष्पाणि परिवर्जयेत्।

प्रोक्तानि राक्षसानीति --------------।।

**ज्ञा.७२.१३१**

### ६.५.४.८ पैशाचं पुष्पम्

**स.४४.१९ - २५,२६**

कनकं कोकमाली च सूर्यनन्दा चतुर्भुजा।

असङ्ग्राह्यं च सर्वेषां पुष्पं पैशाचकं स्मृतम्।।

-----------------------------

बन्धूकं च पलाशं च न ग्राह्यं सर्वदैव तु।

जपाकिंशुकजातानां कुसुमं च कुरण्टकम्।।

कुसुम्भादीनि चान्यानि पैशाचानि विदुर्बुधाः।

**ज्ञा.७२.१३०**

जपाकिंशुककुसुम्भकनककोकमालीचतुर्भुजसूर्यनन्दानां पुष्पाणि पैशाचानि वर्जयेत्।

**स.४४.२५, २६**

### ६.५.५ वैद्याधरं पुष्पम्

**स.४४.५०, ५१**

नरेणाशुचिना स्पृष्टं चण्डालैः पुल्कसैस्तथा।।

विद्याधराणां तद्विद्यादार्चिताङ्गं विदुर्बुधाः।

**ज्ञा.७२.१३१**

**६.५.६ रक्तपुष्पम्**

**वा.२८**

------------- कुसुमाभाजयास्तथा।

रक्तं च करवीराभ्यां मन्दरं मुनिपुष्पकम्।।

कूरण्डं बृहती चैवाशोकं पिण्डातकी तथा।

पट्टिका कुमुदं चैव उत्पलं चारविन्दकम्।।

एतैस्तु सर्वपुष्पाणि रत्न(क्त) पुष्पमिहोच्यते।

**६.५.७ रक्तपुष्पेषु ग्राह्याणि**

**वि.४३.२९३**

रक्तेषु पिण्डितकं पलाशं च सङ्ग्राह्यम् ------------ तत्काले प्रफुल्लं शस्तम्, ऐकाहिकं वा,

**६.५.८ पीतपुष्पम्**

**वा.२८**

कर्णिकारद्वयं चैव मष्कं चारयतं तथा।।

मन्दारं च कुकुण्डं च करवीरं तथोत्पलम्।

एतैश्चान्यानि पुष्पाणि पीतमेवेति कीर्तितम्।।

**६.५.९ वन्यपुष्पम्**

**वा.२८**

श्यामाकं कुरवं चैव कुन्दं च गिरिकर्णिका।।

माधवी लाङ्गुली चैव कदम्बं चार्जुनद्वयम्।
मन्दारमतसी चैव तमालं च त्रिकर्णिका।।

सौगन्धाप्यादयः सर्वे वन्यपुष्पं प्रकीर्तितम्।
एवं पुष्पं द्विधा प्रोक्तं कालं चाकाल्यमेव च।।

**६.५.१० शान्तिकरं पुष्पम्**

**स.४४.१०**

श्वेतं शान्तिकरं ज्ञेयम् ------------- ।

**ज्ञा.७२.१३० ; वि.४३.२९२**

**ज्ञा.४.६**

पुष्पं सौवर्णं नन्द्यावर्ततुलस्यादि चतुर्वर्णयुतम्।

**६.५.११ पौष्टिकं पुष्पम्**

**ज्ञा.७२.१३०**

पीतानि पौष्टिकानि।

**स.४४.१० ; वि.४३.२९२,२९३**

**६.५.१२ विद्वेषणं पुष्पम्**

**स.४४.१०**

रक्तं विद्वेषणं प्रोक्तम् -------------- ।।

**ज्ञा.७२.१३० ; वि.४३.२९३**

### ६.५.१३ सर्ववशीकरं पुष्पम्

**स.४४.१०**

---------------- कृष्णं सर्ववशीकरम्।।

**ज्ञा.७२.१३०**

### ६.५.१४ शोभनं पुष्पम्

**स.४४.८, ९**

तद्दलं तत्प्रफुल्लं तु सद्यस्कं शोभनं मतम्।।

एकाह्निकं तथा पुष्पं द्व्यह्निकं सम्प्रकीर्तितम्।
त्र्यह्निकं तु तथा पुष्पं पाक्षिकं मासिकं तथा।।

### ६.५.१५ पुण्यं पुष्पम्

**स.४४.५३, ५४**

सकिङ्किणीके गन्धाढ्ये जृम्भकाले समाहृतम्।।

नाधावप्लावितं पुष्पं पुण्यपुष्पं प्रकीर्तितम्।
एवं पुष्पं समादाय देवस्यार्चनमाचरेत्।।

### ६.५.१६ शिबुकपुष्पम्

**स.४४.५१, ५२**

ग्रन्थिभग्नं तथायातं ततो मूलं तु पाटितम्।।

ऊर्जितं सुरबिन्दूनां शेषं वै शिबुकं विदुः।

## ६.५.१७ अहेयानि पुष्पादीनि

**ज्ञा.७२.१३१**

षट्पदाघ्रातानि न त्याज्यानि। जलजातान्येकाहातीतानीति केचित्।

**स.४४.३, ४**

पुष्पं पत्रं समाख्यातं तथैवाङ्कुरजादिकम्।
मूलं चैव फलं चैवमर्चनीयं समन्त्रकम्।।

देवार्थमिति चोक्तानां द्रव्याणां च समासतः।
आधावमधिकं तेषां तद्धि सर्वार्थसाधकम्।।

## ६.५.१८ सङ्ग्राह्याणि पुष्पाणि

**स.४४.११ - १८**

मल्लिका मालती जाती दूर्वाङ्कुरतृणातसी।
द्विकर्णी बहुकर्णी च श्वेतकं नन्दकं तथा।।

पुन्नागोऽर्जुनकं चापि नन्द्यावर्ताग्रकर्णिका।
चम्पकाशोकबहुला जातिपुष्पाथ तिन्दुकम्।।

कनकं वाथ कल्हारं कङ्कणी चोग्रकर्णिका।
कालीया च कालान्दा च कर्णिका कृतमालिका।।

केतकी धातकी नन्दा माधवी कुमुदोत्कटम्।
कुरवं पिण्डीतकं चापि नागवृक्षं सुमोदकम्।।

कपाली भद्रकं चापि ककुभोदुम्बरं तथा।

लताजातिषु या जाता गन्धवत्यो विशेषतः।।

तरुजातिषु सर्वासु सुगन्धं शोभनं मतम्।
सर्वत्र प्रसवं ग्राह्यं सुगन्धो यत्र दृश्यते।।

रक्तेषु द्वयमेवं वै सङ्ग्राह्यं पुष्पसञ्चये।
करवीरोत्पलं पद्मं वर्णमिश्रं न रक्तकम्।।

तेषु प्रधानं श्वेताख्यमुत्पलेष्वरुणं विदुः।
पीतवर्णं तथा पुष्पं सङ्ग्राह्यं सर्वमेव तत्।।

**ज्ञा.७२.१२९, १३०**
[कपित्थ इति अधिकः]

**वा.२८**

**वि.४३.२९२**
[बकपुष्पं, तुलसी, पलाश इत्यादीनि अधिकतया सन्ति।]

## ६.५.१९ विष्णोः प्रियकराणि पुष्पाणि

**ज्ञा.७२.१३०**
विष्णोः प्रियकरं श्वेतम्। तस्माच्छतगुणा मल्लिका, मालती च। ततः श्वेतपद्मं, तस्मात् कर्णिकारः, ततः जातिः, ततः शतगुणं चम्पकं श्रेष्ठम्।
**स.४४.२३**

## ६.५.२० श्रीदेवीप्रियकरं पुष्पम्

**स.४४.२४**
श्रीदेव्या यानि पुष्पाणि तैषां वै मल्लिका वरा।
**ज्ञा.७२.१३०**

६.५.२१ भूदेवीप्रियकरं पुष्पम्

**स.४४.२४**

----------- भूम्याः कान्ता वरा मता।।

**ज्ञा.७२.१३०**

६.५.२२ रुद्रप्रियकरपुष्पाणि

**स.४४.२१, २२**

रुद्रे प्रशस्तं चोग्रं वै उग्रगन्धार्कपूतिका।।

निर्गुण्ड्युन्मत्तवैषाख्या विवर्णश्च तथा स्मृताः।
रुद्रस्य यानि पुष्पाणि तेषां नीलोत्पलं वरम्।।

**ज्ञा.७२.१३०**

**वा.२८**

धूर्धन द्रोणपुष्पं च कूरण्डं चागरुस्तथा।
श्वेतार्ककरवीराश्च करञ्जं वकुलं तथा।।

भद्री चैव महाभद्री रुद्रपर्णीस्तथैव च।
कृष्णं च तुलसीपत्रं मुनिपुष्पद्वयं तथा।।

अग्निकर्ण कदम्बाद्यैः रुद्रं चाभ्यर्चयेद् बुधः।

६.५.२३ सूर्यस्य प्रियकरपुष्पाणि

**ज्ञा.७२.१३०**

सूर्यस्य सुवर्चला क्षीरी च।

**वा.२८**

बृहस्पति ? पाटली चैव बन्धूकं लाङ्गुली तथा।

जपादाडिमपुष्पं च किंशुकादीन् विशेषतः।

एतैः पुष्पैः समाराध्य पाटलं च दिवाकरम्।।

### ६.५.२४ ब्रह्मप्रियकरपुष्पाणि

**ज्ञा.७२.१३०**

ब्रह्मणो रक्तानि पद्मपलाशकरवीराणि।

### ६.५.२५ काल्याः प्रियकरं पुष्पम्

**स.४४.२४**

काल्यै द्विकर्णिका ख्याता -----------।

**ज्ञा.७२.१३०**

महाकाल्या जपा कोकमाली।

### ६.५.२६ विष्णुभिन्नदेवपूजार्हाणि पुष्पाणि

**स.४४.२०, २१**

गोक्षुरी सूर्यपूजाश्च जाया ग्राह्या सुवर्चला।

भद्रकाली तथा ग्राह्या कोकमालीजपादयः।।

कनकं स्वर्णमाली च विष्णोरन्यत्र पूजनम्।

**ज्ञा.७२.१३०**

### ६.५.२७ पुष्पाणामलाभे प्रतिनिधिः

**वि.४३.२९३**

अलाभे पुष्पोक्तानां पत्रैरङ्कुरैरक्षतैः तोयेन वाऽर्चयेत्।

### ६.५.२८ प्रातःकालार्चनार्हपुष्पाणि

**क्रि.१०.४५, ४६**

पङ्कजं च पलाशं च तुलसी नवमालिका।।

नन्द्यावर्तं च मन्दारं माधवी चम्पकं तथा।
पुन्नागं केतकी चापि प्रातःकालार्चने दश।।

**वा.२८**

रक्तोत्पलं च पुन्नागं शतपत्रद्वयं तथा।
द्विकर्णी चम्पकाश्चैव नन्द्यावर्तं तु पाटली।।

नीलोत्पलत्रयं चापि कुमुदद्वयमेव च।
कह्लारादीनि सम्प्रोक्तं प्रातःकाले समर्चयेत्।।

यामादर्वाङ् -- विसृज्यादिति कालस्य निश्चयः(?)।

### ६.५.२९ दिवाराध्यं पुष्पम्

**वा.२८**

दिवापुष्पं दिवाराध्यम् ---------------।

### ६.५.३० मध्याह्नकालार्चनार्हपुष्पाणि

**क्रि.१०.४७, ४८**

श्वेताब्जं करवीरं च पलाशं तुलसी तथा।

उत्पलं बिल्वपत्रं च रक्तोत्पलमथापि वा।।

कोविदारैकपत्रं च तापसाङ्कुरमेव च।
प्रोक्तान्येतानि पुष्पाणि दश मध्याह्नपूजने।।

**वा.२८**
श्वेतिका कुमुदं चैव पलाशं करवीरकम्।
नन्दकं कर्णिकारं च मन्दारमतसीं तथा।।

सुमोदं चार्जुनं चैव मुष्काककुभमेव च।
बद्धिया (?) पिण्डितं चैव भूस्तृणं स्थलपङ्कजम्।।

विष्णुक्रान्त्या च दूर्वा च मध्याह्ने चैव चार्चयेत्।
एतैः पुष्पं विसृज्यैव कालाकालं न विक्षयेत्।।

**६.५.३१ सायङ्कालार्चनार्हपुष्पाणि**

**क्रि.१०.४९, ५०**
रक्ताब्जं कुमुदं चैव मल्लिकाजातिमालती।
माधवी करवीरं च ह्रीबेरं गजकर्णिका।।

तथा दमनकं चैव सायङ्कालार्चने दश।

**वा.२८**
जाती चैव महाजातिः क्षुद्रजातिस्तथैव च।
भ्राजातीति भेदेन मल्लिका वकुलं तथा।।

माधवी केतकी द्वौ च सायाह्ने वा समर्चयेत्।
एते विसृज्य निशान्ते मध्याह्ने वा विशेषतः।।

### ६.५.३२ निश्यर्चनार्हं पुष्पम्

**वा.२८**

-------------- निशिपुष्पं तथा निशि।

### ६.५.३३ सर्वकालार्चनार्हपत्रादीनि

**क्रि.१०.५०, ५१**

दूर्वा च तुलसी बिल्वं करवीरं च चम्पकम्।।

सर्वकालार्चनार्हाणि विष्णुक्रान्तं च भद्रया।

### ६.५.३४ अर्चनार्हपत्राणि

**स.४४.२७ - २९**

कृष्णा तु तुलसी चैव बोधनी प्रतिबोधनी।
शङ्खी स्थलारविन्दा च सहदेवादयः सकृत्।।

एकपर्णी द्विपर्णी च रुद्रपर्णी सुखप्रदा।
धातकी सूर्यनन्दा च बिल्वपत्रं तथैव च।।

नमेरुर्नागनन्दा च तथा सूर्यप्रबोधिनी।
एते हि सर्वदैवत्या -----------।।

### ६.५.३५ नित्यार्चने ग्राह्याणि पत्राणि

**वा.२८**

ह्रीबेरोशीरमूलादि पुष्पजातिं प्रगृह्य च।

तुलसी बिल्वपत्रं विष्णुक्रान्तं च दूर्वया।।

श्रीपत्रं सहदेवी च अङ्कुरं स्थलपङ्कजम्।

पत्रं च दमनं चैव पत्रमेवं तु ते दश।।

शतपत्रीद्वयं चैव शमीबिल्वं तथैव च।

पद्मकेत्यादितः सर्वे कर्णिकोद्भवमुच्यते।।

पालाशार्कं शुकं चैव त्रिसन्धिः शाल्मली तथा।

लाङ्गुली दाडिमी चैव ----------------।।

**वि.४३.२९२**

भूतृणस्थलारविन्दबिल्वशमी दूर्वा त्रिपर्णी बहुकर्णितमालसहदेवी शङ्खिनीपत्राणि

------------- ।

**वा.२८**

[कह्लारं - दमनम् इति द्वौ अधिकौ।]

**क्रि.१०.५३**

यद्यत्पुष्पाणि चोक्तानि तत्तत्पत्रैश्च पूजयेत्।

## ६.५.३६ तुलस्या उत्कर्षः

**ज्ञा.७२.१३०**

पत्रेषु तुलसी कृष्णभूतृणञ्च श्रेष्ठम्। तयोः सहस्रगुणा तुलसी। सर्वपुष्पेभ्यस्तुलसी देवेशस्य प्रियतमा भवति।

**स.४४.२६**

तुलसी भूतृणं चैव कृष्णा विष्णोः प्रिया मता।।

**क्रि.१०.५१, ५२**

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम्।।

न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम्।

### ६.५.३७ तुलसीमाहात्म्यम्

**प्र.३५.३२० - ३४२**

सर्वेषामपि पुष्पाणां तुलसी प्रीतिदा हरेः।।

तुलसीदलमादाय यत्र गच्छति पूजकः।
अनुगच्छति तं देवो यथा गौर्वत्सला भृशम्।।

प्रत्यहं पूजयेद्यस्तु तुलस्या गरुडध्वजम्।
जन्ममृत्युजराव्याधिमुक्तो मुक्तिमवाप्नुयात्।।

मणिकाञ्चनपुष्पाणि मुक्तावैडूर्यकाणि च।
तुलसीदलदानस्य कलां नार्हन्ति षोडशीम्।।

सुमञ्जरीदलैर्युक्तैः कोमलैस्तुलसीदलैः।
ये कुर्वन्ति हरेः पूजां ते कृतार्थाः कलौ युगे।।

शुष्कं पर्युषितं वाऽऽर्द्रं काष्ठं वा तुलसीदलम्।

अर्चने वासुदेवस्य लक्षकोटिगुणं भवेत्।
तुलसीग्रहणं शस्तं विष्णोरर्चनहेतवे।।

वर्ज्यं पर्युषितं पुष्पं न वर्ज्यं तुलसीदलम्।
वर्ज्यं पर्युषितं तोयं न वर्ज्यं जाह्नवीजलम्।।

अन्यत्पर्युषितं वर्ज्यं न वर्ज्यं पद्मपुष्पकम्।
शुष्कैः पर्युषितैर्वापि काष्ठमूलमृदादिभिः।
अर्चनाद्वासुदेवस्य मुक्तो भवति पूरुषः।।

पुष्कराद्यानि तीर्थानि गङ्गाद्यास्सरितस्तथा।
देवा दिवि स्थिता ये वै तिष्ठन्ति तुलसीदले।।

तावद्गर्जन्ति पुष्पाणि मालत्यादीनि गर्वतः।
यावन्न प्राप्यते पुण्या तुलसी विष्णुवल्लभा।।

सकृदभ्यर्च्य गोविन्दं तुलस्या चैव मानवः।
मुक्तिभागी निरातङ्कं कृष्णस्यानुचरो भवेत्।।

नाक्षतैरर्चयेद्विष्णुं न शम्भुं शङ्खवारिणा।
नार्चयेद्दूर्वया दुर्गां न तुलस्या सुरान्तरम्।।

दलालाभे तुलस्यास्तु पत्रैराराधयेद्धरिम्।
पत्राभावे शिफाभिर्वा शिफाभावे शिफालवैः।।

लवाभावे मृदा तत्र भक्तिमानर्चयेद्धरिम्।
हरेरभ्यर्चनायां च तुलसी साधनं परम्।।

अलाभे तुलसीत्येवं तन्नामग्रहणं वरम्।
भगवानरविन्दाक्षः सन्तुष्यति सहस्रधा।।

न पद्मैर्नापि कल्हारैः न हेमकुसुमैरपि।
तथा तुष्यति गोविन्दो यथैव तुलसीदलैः।।

सङ्गृह्य तुलसीं भक्त्या सर्वानिष्टविनाशिनीम्।
तुलस्यैव हरेः पूजां ये कुर्वन्ति सदा भुवि।।

तस्मात्तुलस्या सदृशं न च भूतं न भावि च।

तुलसीकानननामोदवासिता यत्र मारुताः।
न तत्र धरणीभागे चरन्ति यमकिङ्कराः।।

'तुलसी तुलसी'त्येवं नामान्यावर्तयन्ति ये।
ते विष्णुलोकमासाद्य पश्यन्ति मधुसूदनम्।।

दर्शनाच्छ्रवणात् स्पर्शात् स्मरणात्कीर्तनादपि।
पुनाति तुलसी पुण्या दशपूर्वान् दशापरान्।।

तुलसीकाननं यत्र यत्र वा हरिकीर्तनम्।
तत्रैवास्ते हरिः श्रीमान् शङ्खचक्रगदाधरः।।

### ६.५.३८ कपित्थदलपूजाकालः

**क्रि.१०.५२**

बिल्वपत्रसमं रात्रौ कपित्थदलमुच्यते।

### ६.५.३९ अर्चनार्हपल्लवादि

**स.४४.३२, ३३**

किशोराणां तु पत्राणां शुष्काणां च तथैव च।
मासमेकं तथा भद्रा दूर्वा च प्रतिबोधिनी।।

पल्लवं चापि भूतानामशोकानां तथैव च।
एवं पर्णं तथा ग्राह्यं माधवीनां लतादयः।।

### ६.५.४० अर्चनार्हा अङ्कुराः

**ज्ञा.७२.१३०**

पुष्पालाभे अङ्कुरोक्ताः सर्वेऽङ्कुराश्च स्नपनोक्तबीजानामङ्कुराश्च। अङ्कुरेषु च तापसाङ्कुरः श्रेष्ठः। सोऽर्चितोऽप्येकाब्दं निर्माल्यं नैव भवेत्। तावत्तावत् प्रक्षाल्यार्चयेत्। अशोकमन्त्रिबोधिनीनामङ्कुरश्च तथैव मासमर्चने योज्यः।

**वा.२८. ;** **वि.४६.२९२**

**स.४४.३०, ३१**

------------------मुनीनामङ्कुरादयः।

अङ्कुराणां च सर्वेषामुत्तमं तापसाङ्कुरम्।।

न निर्माल्यं भवेत्तस्मादब्दमेकं प्रपाटिकम्।

प्रक्षाल्यैवार्चयेन्मासं न निर्माल्यमलाभके।।

यथा सुपतितं पुष्पं शुचि प्रक्षालनाद् भवेत्।

### ६.५.४१ अर्चनार्हं मूलम्

**वि.४३.२९२**

तुलसीह्रीबेरोशीराणां मूलं च।

**वा.२८**

### ६.५.४२ नित्यार्चने अग्राह्याणां पुष्पाणां परिगणनम्

**स.४४.२५, ३५, ३६**

बन्धूकं च पलाशं च न ग्राह्यं सर्वदैव तु।

------------------------------।।

------------------------------।

करण्डं मुण्डकं चापि तथा प्रामीलकं च यत्।।

एवंविधानां वृक्षाणां पुष्पाणि परिवर्जयेत्।

लतानामङ्कुराणां च एवमुक्तं विसर्जयेत्।।

**ज्ञा.७२.१३०, १३१**

[अत्र सुकर्णपुष्पम् इति विशेषः।]

**वि.४३.२९३**

त्र्यहातीतं पद्मं वर्ज्यम्। ------------ कुसुम्भजपाकिंशुकादीनि निर्गुण्ड्यर्कादीनि अन्यानि चोग्रगन्धानि अनुक्तानि सर्वाणि वर्जयेत्।

**स.४४.४२ - ४४**

वर्जयेज्जलजं पुष्पं भस्माक्षिप्तमपोढकम्।।

अनिवेद्यानि पुष्पाणि चत्वार्याहुर्दिवौकसः।
नीपकं कोविदारं च शिरीषं मदयन्तिकम्।।

पूतिगन्धानि पुष्पाणि कुरण्टकुसुमानि च।
एकवर्णान्यगन्धानि पुष्पाणि परिवर्जयेत्।।

**ज्ञा.७२.१३१**

यत्नविकसितभग्नच्छिन्नभग्नविशीर्णसमुत्पाटितसलेपकाजिगर्जितान्यगन्धपूतिगन्धानि भस्माक्षिप्तानि जलजातानि सुगन्धानि जले क्षिप्तानि निर्माल्यस्पृष्टान्येकाहातिक्रान्तानि नराघ्रातानि नरैरशुद्धैः स्पृष्टानि च त्याज्यानि।

**स.४४, ३७, ३८**

**वा.२८**

एवं पुष्पं स्वयं जीर्णं क्रिमिच्छिद्रं तथैव च।

पतितं पूतिगन्धं च नखच्छेदं तथैव च।।

निर्माल्यैरेव संसृष्टं निर्गन्धादीनि वर्जयेत्।

शैवक्षेत्रे समुत्पन्नं चान्यक्षेत्रे तथैव च।।

नरैर्गवाद्यैराघ्रातं वर्जयित्वा समाहितः।

------------------------------।।

------------------------------।

अपक्वं चातिपक्वं च मुकुलं चैव वर्जयेत्।।

सूत्रैर्लतादिनावेष्ट्य न ग्राह्यमिति बुद्धिमान्।

पुष्पैरनुक्तजातीयैः क्रूरदेवार्चनं बुधः।।

**स.४४.५५, ५६**

**वि.४३.२९३**

पुराणं शुष्कं शीर्णं नखरोमादियुक्तं लङ्घितं सलेपं निर्माल्यसंस्पृष्टं पूतिगन्धं

------------ मुखवायुहतं नरैर्गवाद्यैराघ्रातं च सर्वं त्यजेत्।

### ६.५.४३ दोषयुक्तभूमिजातानां पुष्पाणां त्याज्यत्वम्

**स.४४.३४, ३५**

क्षमायां दोषयुक्तायां जातं सर्वं परित्यजेत्।

कौसुम्भकं क्षमाजातं श्मशाने पार्श्वजं तथा।।

चण्डालवाटिकादीनां समीपे वर्जयेत्तथा।

**वि.४३.२९३; ज्ञा.७२.१३१**

### ६.५.४४ नित्यार्चने सामान्यतः ग्राह्यं चतुष्टयम्

**क्रि.१०.५३, ५४**

अर्चको वारि दीपं च पुष्पमेतच्चतुष्टयम्।।

ग्राह्यं सामान्यतस्तेन सम्पूर्णं पूजनं भवेत्।

## ६. उपचारप्रभेदाः

**६.६.१ उपचारशब्दस्य पर्यायौ**

**खि.२२.२**

विग्रहा उपचाराश्च भोगा एकार्थवाचकाः।

**वा.२७ ; वि.४२.२९०**

**६.६.२ विग्रहशब्दस्य निर्वचनम्**

**स.४३.२**

अर्चनार्थं विशेषेण ग्रहणाद्विग्रहः स्मृतः।

**ज्ञा.७३.१३२ ; क्रि.१०,२**

**६.६.३ उपचारशब्दस्य निर्वचनम्**

**स.४३.२**

देवोपचारहेतुत्वादुपचारः प्रकीर्तितः।

**क्रि.१०.१**

**६.६.४.० बाह्योपचारस्य द्वैविध्यम्**

**वा.२५**

बाह्यं च द्विविधं स्मृत्वा स्पृश्यं चास्पृश्यमेव वा।

### ६.६.४.१ स्पृश्योपचाराः

**वा.२५**

आसनं पादपीठं च पादुकं प्रोक्षणं तथा।।

अर्घ्यपात्रं तथा तैलमामलकमिति कङ्कतम्।
अङ्गस्य पिष्टलेपं च स्नानेनाङ्गस्य मर्दनम्।।
वस्त्रोपवीताभरणं गन्धपुष्पाञ्जनं तथा।
अङ्गरागेति भोगस्य स्पृश्यं चैवेति कीर्त्यते।।

### ६.६.४.२ अस्पृश्योपचाराः

**वा.२५**

दर्पणं धूपं दीपं च नीराजनादि चामरम्।
छत्रं ध्वजयुतं तत्र तालवृन्तं ततः परम्।।

नृत्तगेयं तथा वाद्यं स्तोत्रशब्दैस्तु वाहनम्।
शङ्खभेर्यादयस्सर्वे न स्पृश्यं भोगनिर्णयः।।

### ६.६.५ आभ्यन्तरोपचाराः

**वा.२५**

भक्ष्यं च भोज्यं लेह्यं च चोष्यं पेयं च पञ्च च।।
एतैराभ्यन्तरं चैव हृदयङ्गममुच्यते।

### ६.६.६ बाह्याभ्यन्तरोपचाराः

**वा.२५**

दन्तमार्जं तु जिह्वाग्रे निर्लेपं मुखवासकम्।।

तोयं चेत्युपचाराश्च बाह्याभ्यन्तरमुच्यते।

**६.६.७.० स्पृश्यादिभेदेन उपचारस्य चातुर्विध्यम्**

**क्रि.१०. ३५**

स्पृश्या दृश्यास्तथा श्राव्याः भोज्याश्चैव चतुर्विधाः।

**६.६.७.१ स्पृश्योपाचाराः**

**क्रि.१०.३५ - ३६**

आसनं पाद्यदानं च पुष्पं गन्धं तथैव च।।

अर्घ्यं स्नानादयः षट् च मात्रा च मधुपर्ककम्।

पुष्पाञ्जलिप्रयोगश्च स्पृश्या दक्षिणया सह।।

**वा.२४.१७०, १७१**

वस्त्रं च पुष्पमाला च भूषणैरनुलेपनैः।
त्वक्स्थाने देवदेवस्य दत्त्वा चैव यथोचितम्।।

एतैस्तु भोगैस्सन्दद्यान्मन्त्रयुक्तं विचक्षणः।
एवं पञ्चविधं प्रोक्तं बाह्ये चाभ्यन्तरे तु वा।।

**६.६.७.२ दृश्योपचाराः**

**क्रि.१०.३८**

---------------- [1] दृश्याश्चाष्टोपचारकाः।।

---

1. दृश्याश्शेषोपचारकाः इति पाठान्तरम्। तत्र शेषपदेन स्पृश्य-भोज्य-श्राव्य- व्यतिरिक्ताः सर्वे [चतुष्षष्ट्युपचारान्तर्भूताः] गृह्यन्ते।

**वा.२४.१६५, १६६**

नृत्तं च धूपदीपौ च छत्रचामरदर्पणैः।।

वाहनं दानमप्येकं सायं रक्षाजलाञ्जलिम्।

एतैर्देवाय सन्दद्याच्चक्षुर्भ्यां तु विचक्षणः।।

**६.६.७.३ श्राव्योपचाराः**

**क्रि.१०.३८**

गीतं वाद्यं तथा वेदाः पुराणं स्तुतिरेव च।

श्राव्या एव समुद्दिष्टाः -------------।।

**६.६.७.४ भोज्योपचाराः**

**क्रि.१०.३७**

भोज्या एव समुद्दिष्टाश्चत्वारो हविरादयः।

देवस्य दक्षिणे हस्ते दद्यात्तानर्घ्यसंयुतान्।।

**वा.२४.१६८, १६९**

पृथुकं सक्तुलाजैश्च कदल्यादि फलादिषु।

मधुपर्कं हविस्तत्र पानीयं मुखवासके।।

अन्यानि च निवेद्यानि हस्ते देवस्य दक्षिणे।

**६.६.७.५ आघ्रेयोपचाराः**

**क्रि.१०.३९**

धूपार्घ्यमधुपर्काणि आघ्रेयाणीति केचन।

**वा.२४.१६७**

गन्धैस्सर्वैः प्रदातव्यं घ्राणे चैव द्विजोत्तमः।
प्राण्यङ्गैश्च सुगन्धैश्च नृपवत्कर्म चाचरेत्।।

### ६.६.८ उपचारणां नवविधत्वम्

**क्रि.१०.२ - ४**

चतुष्षष्ट्युपचारांश्च पञ्चपञ्चाशदेव च।।

चत्वारिंशत्सहाष्टाभिः द्विचत्वारिंशदेव च।
षट्त्रिंशच्च चतुस्त्रिंशत् द्वात्रिंशन्नवविंशतिः।।

सप्तविंशतिरित्येते नवधा परिकीर्तिताः।
आलयार्चाविधावेते* ----------- ।।

### ६.६.९ उपचाराणामष्टविधत्वम्

**स.४३.१ , ३, ४**

अथार्चनोपचारश्च तस्य भेदश्च वक्ष्यते।
समूर्तमर्चनं नित्यं विग्रहैरष्टभिः स्मृतम्।।

----------------------------

एकविग्रहमाद्यं तु द्वितीयं स्यात् द्विविग्रहम्।
षड्विग्रहं तृतीयं स्याच्चतुर्थं चाष्टविग्रहम्।।

*. 64, 55, 48, 42, 36, 34, 32, 29, 27 . इति उपचाराः नवधा भवन्ति।

एकादशोपचारं च सप्तविंशतिविग्रहम्।
नवविंशतिकं चैव द्वात्रिंशद्विग्रहं तथा।।

### ६.६.१० उपचाराणां षड्विधत्वम्

**ज्ञा.७३.१३२**

द्वात्रिंशन्नवविंशतिः सप्तविंशतिस्त्रयोदशाष्टौ षड्विग्रहा इति समूर्तार्चनस्योपचारा षड्विधा भवन्ति।

### ६.६.११ नित्यार्चने उपचारसङ्ख्या

**वा.२७**

शतमष्टोत्तरं कुर्यात् विंशत्युत्तरमेव च।

### ६.६.१२ उत्तमोत्तमपूजायां चतुष्षष्ट्युपचाराः

**क्रि.१०. ९ - १६**

------------ आसनं स्वागतं तथा।
अनुमानं च पाद्यं च तथैवाचमनं पुनः।।

पुष्पं गन्धं च धूपं च दीपार्घ्याचमनानि च।
स्नानं प्लोतं च वस्त्रं च उत्तरीयं च भूषणम्।।

उपवीतं च पाद्यं च तथैवाचमनं पुनः।
पुष्पं गन्धं च धूपं च दीपमाचमनं तथा।।

हविर्मन्त्राभिधानं स्यात् पानीयाचमनं पुनः।

मुखवासोऽष्टपाद्यादि दर्पणं छत्रचामरौ।।

तालवृन्तं ध्वजगजरथाश्वा नृत्तगेयकौ।
वाद्यमायुधसेवा च मङ्गलानां प्रदक्षिणम्।।

वेदपारायणं दिक्षु पुराणश्रुतिरेव च।
(देवस्यापरभागे तु वेदमन्त्रान्सुघोषयेत्।।

ब्राह्मणैः विष्णुभक्तैश्च सहाचार्यपुरस्सरम्।
देवेशमनुगच्छेयुः वेदानुच्चार्य भूसुराः।।)

मात्रा च मधुपर्कं च हविर्होमौ ततः परम्।
पानीयाचमने चैव मुखवासमतः परम्।।

बलिश्चैव प्रणामश्च पुष्पाञ्जलिरतः परम्।
स्तुतिश्च दक्षिणा पश्चात् अनुमानं च भक्तितः।।

चतुष्षष्ट्युपचाराः स्युः उत्तमोत्तमपूजने।

**६.६.१३ उत्तमोत्तमपूजायां चतुस्त्रिंशदुपचाराः**

**वि.४२.२९०**

आसन, स्वागत, अनुमान, पाद्याऽऽचमन, पुष्प, गन्ध, धूप, दीप, अर्घ्याऽऽचमन, स्नान, प्लोत, वस्त्रोत्तरीय, यज्ञोपवीत, पाद्याऽऽचमन, पुष्प, गन्ध, धूप, दीपाऽऽचमन, हविः, पानीयाऽऽचमन, मुखवास, बलि, प्रणाम, प्रदक्षिणाः पुष्पाञ्जलिसहिता स्तुतिश्चेति द्वात्रिंशदुपचाराः। एते नृत्तगेयसंयुक्त उत्तमोत्तममित्याहुः।

**स.४३, ६ - १० ;   ज्ञा.७३.१३२ ;   वा.२५**

### ६.६.१४ द्वात्रिंशदुपचाराः

**खि.२२, १ - ६**

अथातस्सम्प्रवक्ष्यामि विग्रहाणां विनिर्णयम्।
पूजकेभ्यो हितं पूजाविधिविद्भ्यस्सुसम्मतम्।।

----------------------------------।

प्रणामादिविसर्गान्ताः क्रियाः पूजोदिताः स्मृताः।।

प्रणामावाहने चैव आसनं स्वागतं तथा।
अनुमानं च पाद्यं च तथैवाचमनं तथा।।
पुष्पं गन्धं च धूपं च दीपं चार्घ्यमनन्तरम्।
ततश्चाचमनं स्नानं प्लोतं वस्त्रं तथैव च।।
उत्तरीयोपवीते च भूषणं पाद्यमेव च।
ततश्चाचमनं पुष्पं गन्धं धूपं ततः परम्।।
दीपो हविश्च पानीयं ताम्बूलाचमने तथा।
होमो बलिर्विसर्गश्च द्वात्रिंशद्विग्रहा इमे।।

### ६.६.१५ उत्तममध्यमपूजायां पञ्चपञ्चाशदुपचाराः

**क्रि.१०.१७, १८**

गजध्वजरथाश्वैश्च मङ्गलैरायुधैरपि।
विनैवाप्यनुमानेन स्तुत्या दक्षिणया तथा।।
विग्रहाः पञ्चपञ्चाशत् प्रोक्ता उत्तममध्यमे।

स.४४.२६

तुलसी भूतृणं चैव कृष्णा विष्णोः प्रिया मता।।

क्रि.१०.५१, ५२

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम्।।

न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम्।

६.५.३७ तुलसीमाहात्म्यम्

प्र.३५.३२० - ३४२

सर्वेषामपि पुष्पाणां तुलसी प्रीतिदा हरेः।।

तुलसीदलमादाय यत्र गच्छति पूजकः।
अनुगच्छति तं देवो यथा गौर्वत्सला भृशम्।।

प्रत्यहं पूजयेद्यस्तु तुलस्या गरुडध्वजम्।
जन्ममृत्युजराव्याधिमुक्तो मुक्तिमवाप्नुयात्।।

मणिकाञ्चनपुष्पाणि मुक्तावैडूर्यकाणि च।
तुलसीदलदानस्य कलां नार्हन्ति षोडशीम्।।

सुमञ्जरीदलैर्युक्तैः कोमलैस्तुलसीदलैः।
ये कुर्वन्ति हरेः पूजां ते कृतार्थाः कलौ युगे।।

शुष्कं पर्युषितं वाऽऽर्द्रं काष्ठं वा तुलसीदलम्।

अर्चने वासुदेवस्य लक्षकोटिगुणं भवेत्।
तुलसीग्रहणं शस्तं विष्णोरर्चनहेतवे।।

वर्ज्यं पर्युषितं पुष्पं न वर्ज्यं तुलसीदलम्।
वर्ज्यं पर्युषितं तोयं न वर्ज्यं जाह्नवीजलम्।।

अन्यत्पर्युषितं वर्ज्यं न वर्ज्यं पद्मपुष्पकम्।
शुष्कैः पर्युषितैर्वापि काष्ठमूलमृदादिभिः।
अर्चनाद्वासुदेवस्य मुक्तो भवति पूरुषः।।

पुष्कराद्यानि तीर्थानि गङ्गाद्यास्सरितस्तथा।
देवा दिवि स्थिता ये वै तिष्ठन्ति तुलसीदले।।

तावद्गर्जन्ति पुष्पाणि मालत्यादीनि गर्वतः।
यावन्न प्राप्यते पुण्या तुलसी विष्णुवल्लभा।।

सकृदभ्यर्च्य गोविन्दं तुलस्या चैव मानवः।
मुक्तिभागी निरातङ्कं कृष्णस्यानुचरो भवेत्।।

नाक्षतैरर्चयेद्विष्णुं न शम्भुं शङ्खवारिणा।
नार्चयेद्दूर्वया दुर्गां न तुलस्या सुरान्तरम्।।

दलालाभे तुलस्यास्तु पत्रैराराधयेद्धरिम्।
पत्राभावे शिफाभिर्वा शिफाभावे शिफालवैः।।

लवाभावे मृदा तत्र भक्तिमानर्चयेद्धरिम्।
हरेरभ्यर्चनायां च तुलसी साधनं परम्।।

अलाभे तुलसीत्येवं तन्नामग्रहणं वरम्।
भगवानरविन्दाक्षः सन्तुष्यति सहस्रधा।।

न पद्मैर्नापि कल्हारैः न हेमकुसुमैरपि।
तथा तुष्यति गोविन्दो यथैव तुलसीदलैः।।

सङ्गृह्य तुलसीं भक्त्या सर्वानिष्टविनाशिनीम्।
तुलस्यैव हरेः पूजां ये कुर्वन्ति सदा भुवि।।

तस्मात्तुलस्या सदृशं न च भूतं न भावि च।

तुलसीकाननामोदवासिता यत्र मारुताः।
न तत्र धरणीभागे चरन्ति यमकिङ्कराः।।

'तुलसी तुलसी'त्येवं नामान्यावर्तयन्ति ये।
ते विष्णुलोकमासाद्य पश्यन्ति मधुसूदनम्।।

दर्शनाच्छ्रवणात् स्पर्शात् स्मरणात्कीर्तनादपि।
पुनाति तुलसी पुण्या दशपूर्वान् दशापरान्।।

तुलसीकाननं यत्र यत्र वा हरिकीर्तनम्।
तत्रैवास्ते हरिः श्रीमान् शङ्खचक्रगदाधरः।।

### ६.५.३८ कपित्थदलपूजाकालः

**क्रि.१०.५२**

बिल्वपत्रसमं रात्रौ कपित्थदलमुच्यते।

### ६.५.३९ अर्चनार्हपल्लवादि

**स.४४.३२, ३३**

किशोराणां तु पत्राणां शुष्काणां च तथैव च।
मासमेकं तथा भद्रा दूर्वा च प्रतिबोधिनी।।

पल्लवं चापि भूतानामशोकानां तथैव च।
एवं पर्णं तथा ग्राह्यं माधवीनां लतादयः।।

### ६.५.४० अर्चनार्हा अङ्कुराः

**ज्ञा.७२.१३०**

पुष्पालाभे अङ्कुरोक्ताः सर्वेऽङ्कुराश्च स्नपनोक्तबीजानामङ्कुराश्च। अङ्कुरेषु च तापसाङ्कुरः श्रेष्ठः। सोऽर्चितोऽप्येकाब्दं निर्माल्यं नैव भवेत्। तावत्तावत् प्रक्षाल्यार्चयेत्। अशोकमन्त्रिबोधिनीनामङ्कुरश्च तथैव मासमर्चने योज्यः।

**वा.२८. ;　　　　वि.४६.२९२**

**स.४४.३०, ३१**

------------------मुनीनामङ्कुरादयः।

अङ्कुराणां च सर्वेषामुत्तमं तापसाङ्कुरम्।।

न निर्माल्यं भवेत्तस्मादब्दमेकं प्रपाटिकम्।
प्रक्षाल्यैवार्चयेन्मासं न निर्माल्यमलाभके।।

यथा सुपतितं पुष्पं शुचि प्रक्षालनाद् भवेत्।

## ६.५.४१ अर्चनार्हं मूलम्

**वि.४३.२९२**

तुलसीह्रीबेरोशीराणां मूलं च।

**वा.२८**

## ६.५.४२ नित्यार्चने अग्राह्याणां पुष्पाणां परिगणनम्

**स.४४.२५, ३५, ३६**

बन्धूकं च पलाशं च न ग्राह्यं सर्वदैव तु।
--------------------------------।।

--------------------------------।
करण्डं मुण्डकं चापि तथा प्रामीलकं च यत्।।

एवंविधानां वृक्षाणां पुष्पाणि परिवर्जयेत्।
लतानामङ्कुराणां च एवमुक्तं विसर्जयेत्।।

**ज्ञा.७२.१३०, १३१**

[अत्र सुकर्णपुष्पम् इति विशेषः।]

**वि.४३.२९३**

त्र्यहातीतं पद्मं वर्ज्यम्। ------------- कुसुम्भजपाकिंशुकादीनि निर्गुण्ड्यर्कादीनि अन्यानि चोग्रगन्धानि अनुक्तानि सर्वाणि वर्जयेत्।

**स.४४.४२ - ४४**

वर्जयेज्जलजं पुष्पं भस्माक्षिप्तमपोढकम्।।

अनिवेद्यानि पुष्पाणि चत्वार्याहुर्दिवौकसः।
नीपकं कोविदारं च शिरीषं मदयन्तिकम्।।

पूतिगन्धानि पुष्पाणि कुरण्टकुसुमानि च।
एकवर्णान्यगन्धानि पुष्पाणि परिवर्जयेत्।।

**ज्ञा.७२.१३१**

यत्वविकसितभग्नच्छिन्नभग्नविशीर्णसमुत्पाटितसलेपकाजिगर्जितान्यगन्धपूतिगन्धानि भस्माक्षिप्तानि जलजातानि सुगन्धानि जले क्षिप्तानि निर्माल्यस्पृष्टान्येकाहातिक्रान्तानि नराघ्रातानि नरैरशुद्धैः स्पृष्टानि च त्याज्यानि।

**स.४४, ३७, ३८**

**वा.२८**

एवं पुष्पं स्वयं जीर्णं क्रिमिच्छिद्रं तथैव च।

पतितं पूतिगन्धं च नखच्छेदं तथैव च।।

निर्माल्यैरेव संसृष्टं निर्गन्धादीनि वर्जयेत्।

शैवक्षेत्रे समुत्पन्नं चान्यक्षेत्रे तथैव च।।

नरैर्गवाद्यैराघ्रातं वर्जयित्वा समाहितः।

------------------------------।।

------------------------------।

अपक्वं चातिपक्वं च मुकुलं चैव वर्जयेत्।।

सूत्रैर्लतादिनावेष्ट्य न ग्राह्यमिति बुद्धिमान्।

पुष्पैरनुक्तजातीयैः क्रूरदेवार्चनं बुधः।।

**स.४४.५५, ५६**

**वि.४३.२९३**

पुराणं शुष्कं शीर्णं नखरोमादियुक्तं लङ्घितं सलेपं निर्माल्यसंस्पृष्टं पूतिगन्धं

------------ मुखवायुहतं नरैर्गवाद्यैराघ्रातं च सर्वं त्यजेत्।

### ६.५.४३ दोषयुक्तभूमिजातानां पुष्पाणां त्याज्यत्वम्

**स.४४.३४, ३५**

क्षमायां दोषयुक्तायां जातं सर्वं परित्यजेत्।

कौसुम्भकं क्षमाजातं श्मशाने पार्श्वजं तथा।।

चण्डालवाटिकादीनां समीपे वर्जयेत्तथा।

**वि.४३.२९३; ज्ञा.७२.१३१**

**६.५.४४ नित्यार्चने सामान्यतः ग्राह्यं चतुष्टयम्**

**क्रि.१०.५३, ५४**

अर्चको वारि दीपं च पुष्पमेतच्चतुष्टयम्।।

ग्राह्यं सामान्यतस्तेन सम्पूर्णं पूजनं भवेत्।

# ६. उपचारप्रभेदाः

६.६.१ उपचारशब्दस्य पर्यायौ

खि.२२.२

विग्रहा उपचाराश्च भोगा एकार्थवाचकाः।

वा.२७ ; वि.४२.२९०

६.६.२ विग्रहशब्दस्य निर्वचनम्

स.४३.२

अर्चनार्थं विशेषेण ग्रहणाद्विग्रहः स्मृतः।

ज्ञा.७३.१३२ ; क्रि.१०,२

६.६.३ उपचारशब्दस्य निर्वचनम्

स.४३.२

देवोपचारहेतुत्वादुपचारः प्रकीर्तितः।

क्रि.१०.१

६.६.४.० बाह्योपचारस्य द्वैविध्यम्

वा.२५

बाह्यं च द्विविधं स्मृत्वा स्पृश्यं चास्पृश्यमेव वा।

### ६.६.४.१ स्पृश्योपचाराः

**वा.२५**

आसनं पादपीठं च पादुकं प्रोक्षणं तथा।।

अर्घ्यपात्रं तथा तैलमामलकमिति कङ्कतम्।
अङ्गस्य पिष्टलेपं च स्नानेनाङ्गस्य मर्दनम्।।

वस्त्रोपवीताभरणं गन्धपुष्पाञ्जनं तथा।
अङ्गरागेति भोगस्य स्पृश्यं चैवेति कीर्त्यते।।

### ६.६.४.२ अस्पृश्योपचाराः

**वा.२५**

दर्पणं धूपं दीपं च नीराजनादि चामरम्।
छत्रं ध्वजयुतं तत्र तालवृन्तं ततः परम्।।

नृत्तगेयं तथा वाद्यं स्तोत्रशब्दैस्तु वाहनम्।
शङ्खभेर्यादयस्सर्वे न स्पृश्यं भोगनिर्णयः।।

### ६.६.५ आभ्यन्तरोपचाराः

**वा.२५**

भक्ष्यं च भोज्यं लेह्यं च चोष्यं पेयं च पञ्च च।।
एतैराभ्यन्तरं चैव हृदयङ्गममुच्यते।

### ६.६.६ बाह्याभ्यन्तरोपचाराः

**वा.२५**

दन्तमार्जं तु जिह्वाग्रे निर्लेपं मुखवासकम्।।

तोयं चेत्युपचाराश्च बाह्याभ्यन्तरमुच्यते।

**६.६.७.० स्पृश्यादिभेदेन उपचारस्य चातुर्विध्यम्**

**क्रि.१०. ३५**

स्पृश्या दृश्यास्तथा श्राव्याः भोज्याश्चैव चतुर्विधाः।

**६.६.७.१ स्पृश्योपाचाराः**

**क्रि.१०.३५ - ३६**

आसनं पाद्यदानं च पुष्पं गन्धं तथैव च।।

अर्घ्यं स्नानादयः षट् च मात्रा च मधुपर्ककम्।

पुष्पाञ्जलिप्रयोगश्च स्पृश्या दक्षिणया सह।।

**वा.२४.१७०, १७१**

वस्त्रं च पुष्पमाला च भूषणैरनुलेपनैः।

त्वक्स्थाने देवदेवस्य दत्त्वा चैव यथोचितम्।।

एतैस्तु भोगैस्सन्दद्यान्मन्त्रयुक्तं विचक्षणः।

एवं पञ्चविधं प्रोक्तं बाह्ये चाभ्यन्तरे तु वा।।

**६.६.७.२ दृश्योपचाराः**

**क्रि.१०.३८**

---------------- [1] दृश्याश्चाष्टोपचारकाः।।

---

1. दृश्याश्शेषोपचारकाः इति पाठान्तरम्। तत्र शेषपदेन स्पृश्य-भोज्य-श्राव्य- व्यतिरिक्ताः सर्वे [चतुष्षष्ट्युपचारान्तर्भूताः] गृह्यन्ते।

**वा.२४.१६५, १६६**

नृत्तं च धूपदीपौ च छत्रचामरदर्पणैः।।

वाहनं दानमप्येकं सायं रक्षाजलाञ्जलिम्।

एतैर्देवाय सन्दद्याच्चक्षुर्भ्यां तु विचक्षणः।।

**६.६.७.३ श्राव्योपचाराः**

**क्रि.१०.३८**

गीतं वाद्यं तथा वेदाः पुराणं स्तुतिरेव च।

श्राव्या एव समुद्दिष्टाः -------------।।

**६.६.७.४ भोज्योपचाराः**

**क्रि.१०.३७**

भोज्या एव समुद्दिष्टाश्चत्वारो हविरादयः।

देवस्य दक्षिणे हस्ते दद्यात्तानर्घ्यसंयुतान्।।

**वा.२४.१६८, १६९**

पृथुकं सक्तुलाजैश्च कदल्यादि फलादिषु।

मधुपर्कं हविस्तत्र पानीयं मुखवासके।।

अन्यानि च निवेद्यानि हस्ते देवस्य दक्षिणे।

**६.६.७.५ आघ्रेयोपचाराः**

**क्रि.१०.३९**

धूपार्घ्यमधुपर्काणि आघ्रेयाणीति केचन।

**वा.२४.१६७**

गन्धैस्सर्वैः प्रदातव्यं घ्राणे चैव द्विजोत्तमः।

प्राण्यङ्गैश्च सुगन्धैश्च नृपवत्कर्म चाचरेत्।।

## ६.६.८ उपचारणां नवविधत्वम्

**क्रि.१०.२ - ४**

चतुष्षष्ट्युपचारांश्च पञ्चपञ्चाशदेव च।।

चत्वारिंशत्सहाष्टाभिः द्विचत्वारिंशदेव च।

षट्त्रिंशच्च चतुस्त्रिंशत् द्वात्रिंशन्नवविंशतिः।।

सप्तविंशतिरित्येते नवधा परिकीर्तिताः।

आलयार्चाविधावेते* ----------- ।।

## ६.६.९ उपचाराणामष्टविधत्वम्

**स.४३.१ , ३, ४**

अथार्चनोपचारश्च तस्य भेदश्च वक्ष्यते।

समूर्तमर्चनं नित्यं विग्रहैरष्टभिः स्मृतम्।।

---------------------------

एकविग्रहमाद्यं तु द्वितीयं स्यात् द्विविग्रहम्।

षड्विग्रहं तृतीयं स्याच्चतुर्थं चाष्टविग्रहम्।।

---

*. 64, 55, 48, 42, 36, 34, 32, 29, 27 . इति उपचाराः नवधा भवन्ति।

एकादशोपचारं च सप्तविंशतिविग्रहम्।
नवविंशतिकं चैव द्वात्रिंशद्विग्रहं तथा।।

### ६.६.१० उपचाराणां षड्विधत्वम्

**ज्ञा.७३.१३२**

द्वात्रिंशन्नवविंशतिः सप्तविंशतिस्त्रयोदशाष्टौ षड्विग्रहा इति समूर्तार्चनस्योपचारा षड्विधा भवन्ति।

### ६.६.११ नित्यार्चने उपचारसङ्ख्या

**वा.२७**

शतमष्टोत्तरं कुर्यात् विंशत्युत्तरमेव च।

### ६.६.१२ उत्तमोत्तमपूजायां चतुष्षष्ट्युपचाराः

**क्रि.१०. ९ - १६**

------------ आसनं स्वागतं तथा।
अनुमानं च पाद्यं च तथैवाचमनं पुनः।।

पुष्पं गन्धं च धूपं च दीपार्घ्याचमनानि च।
स्नानं प्लोतं च वस्त्रं च उत्तरीयं च भूषणम्।।

उपवीतं च पाद्यं च तथैवाचमनं पुनः।
पुष्पं गन्धं च धूपं च दीपमाचमनं तथा।।

हविर्मन्त्राभिधानं स्यात् पानीयाचमनं पुनः।

मुखवासोऽष्टपाद्यादि दर्पणं छत्रचामरौ।।

तालवृन्तं ध्वजगजरथाश्वा नृत्तगेयकौ।
वाद्यमायुधसेवा च मङ्गलानां प्रदक्षिणम्।।

वेदपारायणं दिक्षु पुराणश्रुतिरेव च।
(देवस्यापरभागे तु वेदमन्त्रान्सुघोषयेत्।।

ब्राह्मणैः विष्णुभक्तैश्च सहाचार्यपुरस्सरम्।
देवेशमनुगच्छेयुः वेदानुच्चार्य भूसुराः।।)

मात्रा च मधुपर्कं च हविर्होमौ ततः परम्।
पानीयाचमने चैव मुखवासमतः परम्।।

बलिश्चैव प्रणामश्च पुष्पाञ्जलिरतः परम्।
स्तुतिश्च दक्षिणा पश्चात् अनुमानं च भक्तितः।।

चतुष्षष्ट्युपचाराः स्युः उत्तमोत्तमपूजने।

**६.६.१३ उत्तमोत्तमपूजायां चतुस्त्रिंशदुपचाराः**

**वि.४२.२९०**

आसन, स्वागत, अनुमान, पाद्याऽऽचमन, पुष्प, गन्ध, धूप, दीप, अर्घ्याऽचमन, स्नान, प्लोत, वस्त्रोत्तरीय, यज्ञोपवीत, पाद्याऽऽचमन, पुष्प, गन्ध, धूप, दीपाऽऽचमन, हविः, पानीयाऽऽचमन, मुखवास, बलि, प्रणाम, प्रदक्षिणाः पुष्पाञ्जलिसहिता स्तुतिश्चेति द्वात्रिंशदुपचाराः। एते नृत्तगेयसंयुक्त उत्तमोत्तममित्याहुः।

**स.४३, ६ - १० ;  ज्ञा.७३.१३२ ;  वा.२५**

### ६.६.१४ द्वात्रिंशदुपचाराः

**खि.२२, १ - ६**

अथातस्सम्प्रवक्ष्यामि विग्रहाणां विनिर्णयम्।
पूजकेभ्यो हितं पूजाविधिविद्ध्यस्सुसम्मतम्।।

------------------------------------।

प्रणामादिविसर्गान्ताः क्रियाः पूजोदिताः स्मृताः।।

प्रणामावाहने चैव आसनं स्वागतं तथा।
अनुमानं च पाद्यं च तथैवाचमनं तथा।।

पुष्पं गन्धं च धूपं च दीपं चार्घ्यमनन्तरम्।
ततश्चाचमनं स्नानं प्लोतं वस्त्रं तथैव च।।

उत्तरीयोपवीते च भूषणं पाद्यमेव च।
ततश्चाचमनं पुष्पं गन्धं धूपं ततः परम्।।

दीपो हविश्च पानीयं ताम्बूलाचमने तथा।
होमो बलिर्विसर्गश्च द्वात्रिंशद्विग्रहा इमे।।

### ६.६.१५ उत्तममध्यमपूजायां पञ्चपञ्चाशदुपचाराः

**क्रि.१०.१७, १८**

गजध्वजरथाश्वैश्च मङ्गलैरायुधैरपि।
विनैवाप्यनुमानेन स्तुत्या दक्षिणया तथा।।

विग्रहाः पञ्चपञ्चाशत् प्रोक्ता उत्तममध्यमे।

सिद्धं प्रभूतं भक्तं स्याच्छ्रद्धाभक्तिपुरस्कृतम्।।

व्यञ्जनैः बहुभिः शस्तैः नानायोगरसान्वितैः।
सुपाकरम्यैः सक्षारैः सुगन्धैर्मितसैन्धवैः।।

रसालदधिसूपैश्च पानीयेनापि संयुतम्।
निवेदनं मन्त्रवत्स्यात् प्रभूतं नाम विग्रहः।।

नैमित्तिकं भवेदन्ते प्रदातव्यं प्रयत्नतः।
उत्सवान्ते स्नापनान्ते राज्ञो जन्मदिनेऽपि च।।

यजमानस्य जन्मर्क्षे विष्णुपञ्चदिनेऽपि च।
कृत्तिकादीपदानान्ते तथाऽऽग्रयणपूजने।।
पुण्यर्क्षेष्वपि चान्येषु कर्तव्यं कामदायि तत्।

## ६.६.६२ देशकालानुरूप्येण उपचारार्पणम्

**खि.२२.१३२ - १३४**

देशकालानुरूपैश्च द्रव्यैरपि विधानवित्।।

उपचारैश्च सङ्ख्यातैरनुकूलैश्च पूजयेत्।
राजवत्पूजयेद्देवं यजमानस्तु भक्तितः।।

अनिन्द्याभिः क्रियाभिश्च वस्तुभिः शुचिभिर्बुधः।

### ६.६.६३ सामान्यतः उपचारमन्त्राः

**ज्ञा.७३.१३५**

स्थानकासनशयनेषु मत्स्यादिप्रादुर्भावेष्वन्यदेवेषु च यत्र विशेषो नैवोक्तः तत्र सर्वत्रायं विधिः सामान्यः। विष्णोः पञ्चमूर्तिमन्त्रैरन्येषां चतुमूर्तिनाम-मन्त्रैरावाहनाद्युपचारान् करोति। द्विजातिरतन्द्रितो देवेशस्यार्चनं भक्त्या नित्यं तद्बेरे कुर्यात्। बेराभावे कूर्चं निधाय देवं ध्यायन् जले वा अर्चनमारभेत।

# ७. उपचारविधयः

## ६.७.१ आवाहनोपचारस्य लक्षणम्

### खि.२२.१५ - २२

आपूर्य प्रणिधिं पुष्पकूर्चाक्षतसमन्विताम्।
मन्त्रपूतेन तोयेन पाणिभ्यां तं तु धारयन्।।

निष्कलं निर्मलं देवं सर्वव्यापिनमव्ययम्।
ध्यानमन्थेन हृदये सम्मन्थ्याप्सु निवेशयेत्।।

ततस्तत्तोयमादाय तेन कूर्चेन मन्त्रतः।
बिम्बस्य स्रावयेन्मूर्ध्नि स आवाहनविग्रहः।।

निष्कलं सकलं कर्तुं ध्यानं स्यात्सकलक्रिया।
विष्णोरायतनं ह्यापः स तत्र प्रतिगृह्यते।।

तस्यैव सूनवस्त्वेतास्तस्मात्तं ह्यप्सु पूजयेत्।
यथाऽरण्यां स्थितो वह्निः सर्वव्याप्येकतो भवेत्।
मथनादेव सन्दीप्तस्तद्वद्देवेश्वरो हरिः।।

सर्वगस्सन् जगद्व्यापी ध्यानमन्थप्रबोधितः।
भक्तानुकम्पया सोऽपि विभूतिं स्वां सुविस्तृताम्।।

सङ्क्षिप्य चैकीभवति कलापीव कलापकम्।

तस्मात्तं निष्कलं ध्यायंत्सकलं मन्त्रशक्तितः।।

एकत्र स्मरणं यत्तदावाहनमुदाहृतम्।

**ज्ञा.७३.१३२**

यद् ध्रुवबेरात् प्रणिधिजले पूर्ववद् ध्यात्वा तज्जलेन कौतुकबिम्बस्य मूर्ध्नि तत् प्राणशक्तिरिति स्रावणमावाहनम्।

**खि.२२, २३**

ध्रुवकौतुकयोस्सत्त्वे ध्रुवात्पात्रे विचिन्त्य वै।
तस्मात्तु कौतुके बेरे सम्यगावाहयेद् बुधः।।

### ६.७.२.० आवाहनोपचारस्य द्वैविध्यम्

**ज्ञा.७३.१३२**

एतेषाम् [1]आद्यमावाहनम्। तद् द्विविधं भवति अचलं चलमिति।

### ६.७.२.१ अचलम् आवाहनम्

**ज्ञा.७३.१३२**

यथा हि अरण्यामनलः सर्वव्याप्येकत्र मथनाज्ज्वलति तथा निष्कलं विष्णुं सर्वव्यापिनं ध्यानमथनेन हृद्याविर्भूतं तेजोभास्वरं भक्त्या सकलं सङ्कल्प्य अचले ध्रुवबेरे कृतं यत् पूर्वमावाहनं तदचलम्। तस्मादेव सकलम्।

---

1. विग्रहाणाम्।

### ६.७.२.२ चलम् आवाहनम्

**ज्ञा.७३.१३२**

ध्यानेन चले कौतुकबिम्बे नित्यं यत् क्रियते तच्चलम्।

### ६.७.३ त्रिकालपूजायामावाहनविसर्जनयोः कालः

**खि.२२, २४**

त्रिकालपूजनं यत्र प्रातरावाहनं चरेत्।
अन्त्यसन्ध्यार्चनान्ते तु विसर्जनमथाचरेत्।।

### ६.७.४ एकबेरार्चनायामावाहनविसर्जनयोर्निषेधः

**खि.२२.२५**

एकबेरार्चना यत्र नावाहनविसर्जने।

### ६.७.५ मण्डलाद्यर्चने आवाहनं विसर्जनं च

**खि.२२.२५, २६**

मण्डले च जले चैव कूर्चे वा यत्र चार्चनम्।।

समावाह्यार्चयित्वा तु पूजनान्ते विसर्जयेत्।

### ६.७.६ आसनोपचारः

**ज्ञा. ७३. १३२**

पुष्पदर्भकुशेष्वेकं पीठान्ते न्यस्य तत्रासीनं देवं ध्यायेत्तदासनम् ।

**खि. २२.२६**

अनुरूपासनं पुष्पैः सुसङ्कल्प्य समन्त्रकम्।।

'आस्यताम्' इति देवेशमासयेदासनं तु तत्।

**वा.२४**

पीढादौ तु सुखासीनं हरिं ध्यात्वा तदासनम्।

### ६.७.७ स्वागतोपचारः

**ज्ञा.७३.१३२**

विग्रहस्याभिमुखीकरणम् स्वागतम्।

**खि.२२, २७**

**वा.२४**

सुमुखीकरणं हस्ते स्वागतं परिकीर्तितम्।।

### ६.७.८ अनुमाननोपचारः

**खि.२२.२८**

मया कृतं क्षमस्वेदं सर्वं देवेति याचनम्।

अनुमान इति प्रोक्त उपचारसमन्त्रकम्।।

**ज्ञा.७३.१३२**

**वा.२४**

सङ्गृह्य तत्र सीदेति वाचकं त्वनुमानकम्।

### ६.७.९ पादुकोपचारः

**वा.२४**

पादपद्मं यथा विष्णोः तथा हेमादिभिः कृतम्।।

पादवत्पादुकयुगं पादुकं तदुदाहृतम्।

### ६.७.१० दन्तधावनोपचारः

**नि. २३**

शाश्वामौदुम्बरीमन्यां याज्ञीकं वा यथोचितम्।

दन्तजिह्वादिशुद्ध्यर्थं दानं यद्दन्तधावनम्।।

**वा.२४**

नारिकेलस्य वेणोर्वा दन्तशुध्यर्थमाहरेत्।

### ६.७.११ मुखप्रक्षालनम्

तत्तुर्यांशकविस्तारं जिह्वापट्टं समाहरेत्।।

तत्संस्मृत्वा जलस्रावं मुखप्रक्षालनं विदुः।

### ६.७.१२ अर्घ्योपचारः

**खि.२२.५५ - ५८**

कुशाग्रं तिलसिद्धार्थतण्डुला अक्षतास्तथा।।

पयो दधि जलं चेति अर्घ्यमष्टाङ्गमुच्यते।

अष्टाङ्गं वा यथालाभं द्रव्यं पात्रे निधाय वै।।

पूरयित्वाम्बुना पात्रं देयमर्घ्यं तु मन्त्रतः।
हस्ताभ्यामर्घ्यमादाय बिम्बमूर्ध्नि निवेदयेत्।।

मन्त्रवद्दर्शनं विष्णोः प्रोक्षणं चार्घ्यविग्रहः।

**ज्ञा.७३.१३३**

कुडुबसम्पूर्णानि पञ्च त्रीणि द्वे वा तथा अर्घ्यद्रव्यैः आपूर्य ललाटान्तमुद्धृत्यार्घ्यं दद्यादर्घ्यम्। तस्यालाभेऽक्षतं कूर्चेन तोयदानं वा।

**वा.२४**

कुशाक्षततिलव्रीहियवमाषप्रियङ्गवः।।
सिद्धार्थकसमायुक्तमित्यर्घ्यद्रव्यमुच्यते।
अष्टद्रव्यैस्तु संयुक्तमर्घ्यं प्रस्थद्वयं मतम्।।

**प्र.१९.७०.७१**

आपः क्षीरकुशाग्रादि यवसिद्धार्थतण्डुलैः।।
तिलव्रीहिसमायुक्तैः अर्घ्यमष्टाङ्गमुच्यते।

**खि.२०.१२३ - १२८**

--------------- पश्चादर्घ्यं च साधयेत्।।

प्रथमं सिद्धार्थकं चैव द्वितीयं च कुशोदकम्।
तृतीयं तु तिलं प्रोक्तं चतुर्थं तण्डुलं तथा।।

पञ्चमं दधि षष्ठं च क्षीरं सप्तममक्षताः।
अष्टमं तोयमित्यष्टद्रव्यमर्घ्यमुदीरितम्।।

एतानि च समाहृत्य पात्रे सम्यक् समुत्क्षिपेत्।
आमा वाजस्य मन्त्रेण अर्घ्यपात्राणि शोधयेत्।।

सोमं तत्र समभ्यर्च्य पुनस्तानि च शोधयेत्।
अर्घ्यद्रव्याणि चादाय गायत्र्या तत्र निक्षिपेत्।।

अभिघार्य घृतेनैव देवस्याभिमुखे न्यसेत्।
ततो द्रव्याणि चान्यानि पूजार्थान्याहरेद्बुधः।।

**स.४०.६३, ६५ ; क्रि.९.१४३, १४४**

**ज्ञा.६९.१२५, १२६**

'आ मा वाज'स्येत्यर्घ्यपात्राणि संशोध्य वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रमिति पात्राधिदेवमाराध्य प्रथमं सिद्धार्थकं द्वितीयं कुशाग्रं तृतीयं तिलं चतुर्थं तण्डुलं पञ्चमं दधि षष्ठं क्षीरं सप्तममक्षतमष्टमं तोयमिति सङ्गृह्य कुडुबमात्रं पृथक् पृथक् गायत्र्या क्षिप्त्वा घृतेनाभिघार्य।

**अ.२३ ; नि.२२**

### ६.७.१३ परिवारदेवानामर्घ्यद्रव्याणि

**खि.२२.६१ - ६३**

अक्षतास्तण्डुलाश्चैव अम्बुना मिश्रिता यदि।।
पञ्चाङ्गमर्घ्यमुद्दिष्टं विष्णोरन्यत्र पूजने।
तण्डुलव्रीहिसंयोगः कीर्त्यतेऽच्युतमित्यपि।।
परिवारोक्तदेवानां स्यादर्घ्यपरिकल्पने।

### ६.७.१४ अर्घ्यद्रव्यप्रतिनिधिः

**खि.२२.६३**

अर्घ्यद्रव्यस्य चालाभे अर्घ्यवत्पुष्पमर्पयेत्।।

### ६.७.१५.० अर्घ्यं त्रिविधं दृश्यादिभेदेन

**क्रि.९.१४७**

दृश्यं स्पृश्यं निवेद्यं स त्रिधार्घ्यं परिकीर्तितम्।।

### ६.७.१५.१ दृश्याद्यर्घ्याणां विनियोगविषयः

**क्रि.९.१४८**

अलङ्कारासने दृश्यं स्पृश्यं स्नानासने तथा।
मन्त्रासने निवेद्यं स्यात् तत्रापि स्पृश्यमेव वा।।

### ६.७.१६ पाद्योपचारः

**खि.३२.२९, ३०**

एलातक्कोलयुक्तेन दूर्वाक्षतयुतेन वा।
पादप्रक्षालनार्थं तु मन्त्रपूतेन वारिणा।।

कूर्चेन पादयोस्सेकः पाद्यं विद्यात्समन्त्रकम्।
अथवा भावनैर्युक्तं शङ्खाग्रेण स्रवेज्जलम्।।

**ज्ञा.७३.१३२**

### ६.७.१७ पाद्यस्य विनियोगविषयः

**वा.२४**

दानन्तु वारिणः पाद्यं पादप्रक्षलनाय वै।

### ६.७.१८ आचमनोपचारः

**खि.२२.३० - ३२**

सङ्कल्प्याचमनार्थं तु तोयं मन्त्रसमन्वितम्।।

दद्याद्यद्दक्षिणे हस्ते तदाचमनमुच्यते।

तोयमक्षतसंयुक्तं गालितं शुद्धवारिणा।।

तदेवाचमनायार्हं तोयं कुशसमन्वितम्।

**ज्ञा.७३.१३२**

### ६.७.१९ आचमनसमर्पणस्य कालः

**वा.२७**

पाद्यान्ते च तथार्घ्यान्ते स्नानान्ते वस्त्रदापने।।

मधुपर्के निवेद्यान्ते दद्यादाचमनं पृथक्।

एवमेव प्रकर्तव्यं इति शास्त्रेण निश्चयः।।

### ६.७.२० स्नानोपचारः

**खि.२२.६४ - ६६**

बिम्बशुद्धिं च कृत्वा तु शोधनीयेन वस्तुना।

पश्चात्प्रक्षाल्य मन्त्रेण स्नापनं स्नानविग्रहः।।

स्नापनप्रतिमायां तु स्नानमन्यत्र प्रोक्षणम्।
बिम्बे स्नानं न सौवर्णे तत्र च प्रोक्षणं स्मृतम्।।

त्रिकालपूजनायुक्ते स्नापयेत्प्रातरेव तु।
प्रोक्षयेदन्यकाले तु मन्त्रेणेत्याह पूर्वजः।।

## ६.७.२१ स्नानीयतीर्थस्य उत्तमादिभेदः

**प्र.१९.६८**

[1]उत्तमं त्रिगुणैरद्भिः स्नानं चाधममुच्यते।
अभिषेको नदीभ्यस्तु मध्यमे मध्यमं भवेत्।।

## ६.७.२२.० स्नानोपचारस्य द्वैविध्यम्

**ज्ञा.७३.१३३**

स्नानं च द्विविधमभिषेकोऽभ्युक्षणमिति।

## ६.७.२२.१ स्नानोपचारः अभिषेकः

**ज्ञा.७३.१३३**

प्रातर्बिम्बशुद्ध्यर्थमभिषेकः। पूर्वमेवं कृत्वाऽर्चनाङ्गमभ्युक्षणं च कुर्यात्।

1. अस्य श्लोकस्य भावः न स्फुटमवगम्यते।

### ६.७.२२.२ स्नानोपचारः अभ्युक्षणम्

**ज्ञा.७३.१३३**

मध्याह्नेऽभ्युक्षणमेव। रात्रौ स्नानद्वयं न कुर्यात्। अरूपे अर्चनेऽभ्युक्षणमेव। वर्णयुक्ते बिम्बे स्नानं न विधीयते।

### ६.७.२३ अङ्गोद्वर्तनद्रव्याणि

**वा.२४**

अलकामोचना ज्ञेया ध्यानं तस्यैव कर्मणि।
तैलाभ्यङ्गं समुद्दिष्टं मौलि तैलस्य मर्दनम्।।

अलकामोचनं प्रोक्तं तत्क्रियां च न संस्मृतिः।
अथो लम्बं त्रितालं स्यात्तत्प्रणामाङ्घ्रिसंयुतम्।।

चामरं सम्प्रकल्प्यैव तालवृन्तं च कारयेत्।
मुख्यमेतद्धिरण्येन मणिना च विभूषितम्।।

श्रीपत्र माषचूर्णं स्यात्तिंत्रिण्यामलकानि च।

कणजीरेण संयुक्तं केशशुद्ध्यर्थमाहरेत्।।

(शालिपिष्टं सुगन्धं च पलालस्य तु भस्मकं।)
श्वेताश्मचूर्णं देवस्य अङ्गोद्वर्तार्थमाहरेत्।।

परिशुद्धनिशासारमार्द्रं वा शुष्कमाहरेत्।
सुसूक्ष्मं वेष्टयित्वा तु स्वर्णकुङ्कुमचन्दनैः।।

मिश्रीकृत्य पुनश्श्वेतान्वेष्टयित्वा मनोहरम्।
वारिजपुष्पधूपैस्तु निशाकल्पन्तु वर्णकम्।।

## ६.७.२४ प्लोतोपचारः

**खि.२२.६७**

वस्त्रेणाभ्यङ्गसम्मर्दः समन्त्रं प्लोतविग्रहः।।

**ज्ञा.७३.१३३**

## ६.७.२५ प्लोतवस्त्राद्यभावे प्रतिनिधिः

**ज्ञा.७३.११३**

नित्यार्चनायां प्लोतवस्त्रोत्तरीयोपवीतानामलाभे अङ्कुरदर्भकुशपुष्पाणाम् अन्यतमं वा दत्वा तथा पाद्याचमनपुष्पगन्धधूपदीपांश्च दद्यात्। देवं ध्यायन् तत्तद्द्रव्याणामलाभे प्रतिनिधिं वा सङ्कल्प्य पृथक्पृथक् दत्वा नमस्कारं च कुर्यात्।

**खि.२२.१३५**

## ६.७.२६ वस्त्रोपचारः

**खि.२२.६८**

क्षौमकौशेयकार्पासवस्त्रैः शुद्धैस्समन्त्रकम्।
परिधानकरणं यत्तद्वस्त्रविग्रह उच्यते।।

**ज्ञा.७३.१३३**

सूक्ष्मदुकूलपट्टेनान्येन वाससा वा आच्छादयेत् तत् वस्त्रम्। तथा तेनैवोत्तरीयं च।

## ६.७.२७ उत्तरीयोपचारः

**खि.२२.६९**

वस्त्रेणैवोत्तरासङ्कल्पनं मन्त्रवद्विभोः।
उत्तरीयमिति ख्यातो विग्रहो विधिकोविदैः।।

**ज्ञा.७३.१३३**

## ६.७.२८ उपवीतोपचारः

**खि.२२.७०**

सौवर्णं चाथ कार्पासमुपवीतं समन्त्रकम्।
प्रदद्यादुपवीतं हि विग्रहः स निगद्यते।।

**ज्ञा.७३.१३३**

सौवर्णं तान्तवं वा उपवीतम्।

**वा.२४**

एकाङ्गुलविशालेन विहितं ब्रह्मसूत्रवत्।
कार्पासजं सुवर्णं वा उत्तरीयं प्रभूषितम्।।

वामग्रीवात्समारभ्य सव्यकट्यवलम्बितम्।
त्रिसूत्रनिर्मितं चैव उपवीतं प्रचोदितम्।।

## ६.७.२९ भूषणोपचारः

**खि.२२.७१, ७२**

सौवर्णैः भूषणैर्मुक्तामणिक्लृप्तैः सुमैरपि।

यथाशोभं विचिन्त्यैव मन्त्रेणाङ्गेषु योजनम्।।

धातुभिश्चाप्यलङ्कारः स स्यात् भूषणविग्रहः।

**ज्ञा.७३.१३३**

### ६.७.३० पुष्पोपचारः

**खि.२२.३२, ३३**

मूर्ध्नि पीठे समन्ताच्च भुजयोः शङ्खचक्रयोः।।

मन्त्रवत्पुष्पविन्यासो पुष्पविग्रह उच्यते।
तत्तद्वेलासु सम्फुल्लपुष्पैः पूजा प्रशस्यते।।

### ६.७.३१ स्रगुपचारः

**वा.२४**

पादे च पुष्पविन्यासं मस्तकायुधबाहुषु।
मौलि संवेष्टितं चैव पुष्पमेवमुदीरयन्।।

स्कन्धादा चरणान्तं वै लम्बिता स्रक् प्रकीर्तिता।

### ६.७.३२ पवित्रलक्षणम्

**वा.२४**

ग्रन्थिमेकाङ्गुलं कृत्वा वलयं चतुरङ्गुलम्।
अग्रं कुशद्वयेनैव पवित्रं संप्रकल्पयेत्।।

### ६.७.३३ गन्धोपचारः

**ज्ञा.७३.१३२**

चन्दनकोष्ठादीन् जलेन पेषयित्वा मौलिललाटहृदयभुजेषु नाभेरूर्ध्वे सर्वत्र वा समालेपयेद् गन्धम्।

**खि.२२.३४**

ललाटबाहुकण्ठेषु तथोरसि च मन्त्रतः।
चन्दनेन सुगन्धेन स्वालेपो गन्धविग्रहः।।

**वा.२४**

चन्दनं हिमतोयञ्च कर्पूरागुरुकुङ्कुमैः।।

कोष्टकस्तूरिमांसी स्याच्चाष्टगन्धाः प्रकीर्तिताः।
पिष्टन्तु चन्दनादीनामेतद् गन्धमुदाहृतम्।।

**प्र.१९.७१, ७२**

चन्दनं चागुरुश्चैव कुङ्कुमं गन्ध उच्यते।।

एकं द्वयं त्रयं वापि कर्पूरेण चतुष्टयम्।

### ६.७.३४ अक्षतोपचारः

**वा.२४**

तण्डुलं व्रीहिसंयुक्तमक्षतं च प्रकीर्त्यते।।

तण्डुलं यवसंयुक्तं सर्षपैश्चाक्षतं भवेत्।

### ६.७.३५ दर्पणोपचारः

**वा.२४**

दर्पणं कांस्यसारश्च कृतं सम्पूर्णचन्द्रवत्।।

फालकं पादवत् पादं सिंहव्यालोपरि स्थितम्।
सौवर्णराजताद्यैस्तु यष्टिर्वेदाङ्गुलं स्मृतम्।।

### ६.७.३६ धूपोपचारः

**ज्ञा.७३.१३२**

गुग्गुलुकोष्ठगुरुचन्दनबिल्वघनशर्कराद्राक्षागुलाद्यैः सुगन्धधूपैः घृतमिश्रैः यथालाभैश्चतुर्दिक्षु धूपयेद्धूपम्।

**वा.२४**

गुग्गुल्वगुरुकोष्ठुस्तु कर्पूरोशीरचन्दनम्।
सर्पिर्घनं गुडा बिल्वा धूपोयं समुदीरितः।।

दशद्रव्ययुताङ्गारो धूपमेव युतं स्मरेत्।

**खि.२२.३८ - ४०**

शीतनिर्यासकान्तादीन् (?) क्रमवृद्ध्या विचूर्णितान्।

चान्द्रेण शीततुल्येन घृतमिश्रेण धूपयेत्।
शीतारिर्नाम धूपोऽयं विष्णोराराधने वरः।।

अनेन धूपयेद्वापि तथा गुग्गुलुनापि वा।
समन्त्रं धूपदानं तु धूपविग्रह उच्यते।।

**प्र.१९.७२**

उशीरचन्दनोपेतं घृतयुक्तं घृताप्लुतम्।।

किञ्चित्कर्पूरसंयुक्तं धूपमित्युच्यते बुधैः।

### ६.७.३७ दीपोपचारः

**खि.२२.४४ - ४९**

दक्षिणाङ्घ्रिं समारभ्य वामपादावसानकम्।
नेत्रान्तं दर्शयेद्दीपं प्रणवाकारतः पृथक्।।

'विष्णोः कर्माणि' मन्त्रेण दीपमश्रीविनाशकम्।
तन्तुभिः पद्मनालोत्थैः कार्पासैर्वाथ तन्तुभिः।।

कार्पासपिचुना वाथ कारयेदथ वर्तिकाम्।
घृतेन वाथ तैलेन दीपं सन्दीप्य दर्शयेत्।।

समन्त्रं देवपार्श्वे यः दीपविग्रह उच्यते।
-----------------------------।।

अथ मानाङ्गुलोत्सेधा नित्याऽनिर्वाणदीपिका।
कर्पूराद्यैस्तु वा गन्धाध्युषितस्नेहसंप्लुताम्।।

वर्तिं कृत्वाथवा दद्याद्दीपं प्रियतमं हरेः।

**वा.२४**

कपिलादिघृतं ग्राह्यं तैलं शुद्धमथापि वा।।

दीपार्थमेव सङ्ग्राह्ये हेरण्डादीनि वर्जयेत्।
नवदीपयुतो दीपः सप्तपञ्चत्रयञ्च वा।।

**६.७.३८ मधुपर्कोपचारः**

**वा.२४**

इक्षुर्मधु दधिक्षीरं घृतं फलयुतं तु वा।
प्रस्थप्रमाणमेतेषां मधुपर्कमिहोच्यते।।

**प्र.१८.१९८**

घृतं मधु गुडं चैव पयो दधिसमन्वितम्।
प्रस्थमात्रं तु सङ्ग्राह्यं मधुपर्कमिहोच्यते।।

**नि.२२**

**६.७.३९ हविरुपचारः**

**खि.२२.७२, ७३**

ज्ञात्वा तु हविषां भेदं मूर्तीनां सन्निवेदनम्।।

समन्त्रं हविराख्यातो विग्रहो मुनिभिर्मतः।

**६.७.४० पानीयोपचारः**

**खि.२२.१०८**

शीतं पर्युक्षितं तोयं गन्धद्रव्यैश्च वासितम्।
दद्याद्यन्मन्त्रवत्तद्धि पानीयं नाम विग्रहः।।

**ज्ञा.७३.१३३, १३४**

वस्त्रोत्पूतं शुद्धं शीतलं स्वादु सुगन्धि(तं) वारि पात्रे पानीयं दत्वा।

## ६.७.४१ मुखवासोपचारः

### ज्ञा.७३.१३४

आचमनान्ते कर्पूरजातीफलैलालवङ्गसहितं सक्रमुकं ताम्बूलं दद्यान्मुखवासः।

### खि.२२.१०९

केवलं वाथ ताम्बूलं कर्पूरैलादिभिर्युतम्।
यत्प्रदद्यात्तु मन्त्रेण मुखवासं हि तं विदुः।।

### वा.२४

श्वेतपत्रं च, चूर्णं च क्रमुकानां फलानि च।
नारिकेलफलोपेतं मातुलुङ्गफलैर्युतम्।।

एलातक्कोलकं चैव मुखवासं प्रचक्षते।

## ६.७.४२ होमोपचारः

### खि.२२.११० - ११६

आलयाद्दक्षिणे वापि आग्नेय्यां वा महानसे।
औपासनाग्निं सभ्यं वा कल्पयित्वा यथाविधि।।

नित्याग्निं तत्र सन्न्यस्य आधारोक्तविधानतः।
तमग्निं गोपयित्वा तु नित्यं तस्मिन् समाहितः।।

'अतो देवा' दिभिस्सार्धं मूर्तिहोमं समाचरेत्।
अथवा केवलं चुल्यामग्निं संसाध्य मन्त्रतः।।

परिस्तीर्य हुनेदग्नौ चरुणा च घृतेन च।
गोघृतेन सुहोतव्यममिश्रेण प्रयत्नतः।।

तदालयगतेभ्यश्च पार्षदेभ्यस्समन्ततः।

केवलं मूर्तिमन्त्रैर्वा तत्तन्मन्त्रैश्च वा हुनेत्।।

सभ्येऽग्नौ उक्तवत्साध्य पुनर्होमं समाचरेत्।
प्रज्वाल्याग्निं परिस्तीर्य कुर्यादौपासनाग्निवत्।।

दक्षिणान्ते बलेः पूर्वमेवं स्याद्धोमविग्रहः।

**६.७.४३ बल्युपचारः**

**खि.२२.११६ - ११८**

पुष्पान्नार्घ्यैस्त्रिकालं यत्संसाध्य विधिना बलिम्।।

समावाह्य च देवेशं दीपाद्दीपमिवाच्युतम्।
परीत्य मन्दिरं पश्चात् शक्तिं तां तत्र चार्पयेत्।।

बलिविग्रह उद्दिष्टस्स तु सर्वबलप्रदः।

**६.७.४४ प्रणामोपचारः**

**ज्ञा.७३.१३४**

विधिना बलिमाराध्य देवमनुमान्य बलिमुद्धृत्य प्रदक्षिणं कारयित्वा विष्णुसूक्तेन मस्तिष्कादिपञ्चप्रणामांश्च कुर्यात्।

**खि.२२.१४**

**६.७.४५.० प्रणामोपचारस्य पञ्चविधत्वम्**

**खि.२२.७, ८**

प्रणामस्स्यान्नमस्कारः स तु पञ्चविधः स्मृतः।।

मस्तिष्कं सम्पुटं चैव प्रह्वाङ्गं दण्डसंज्ञितम्।
पञ्चाङ्गं पञ्चमं प्राहुस्तेषां रूपं प्रकीर्त्यते।।

**ज्ञा.७३.१३४**

**६.७.४५.१ मस्तिष्कप्रणामोपचारः**

**खि.२२.९**

चिन्तयन् मनसा देवं मस्तकेऽञ्जलिसंयुतम्।
मस्तिष्कमिति विज्ञेयः प्रणामः प्रथमः स्मृतः।।

**स.४३.१८, १९; ज्ञा.७३.१३४**

**६.७.४५.२ सम्पुटप्रणामोपचारः**

**खि.२२.१०**

[1]तथा ध्यायन् हृदा देवं हृदयेऽञ्जलिसंयुतम्।
क्रियमाणो नमस्कारस्सम्पुटः परिकीर्तितः।।

**स.४३.१९; ज्ञा.७३.१३४**

**६.७.४५.३ प्रह्वाङ्गप्रणामोपचारः**

**खि.२२.११**

अञ्जलिं हृदये कृत्वा नतकायेन भक्तितः।
क्रियते यो नमस्कारः प्रह्वाङ्गस्स उदाहृतः।।

**स.४३.२०; ज्ञा.७३.१३४**

**६.७.४५.४ दण्डप्रणामोपचारः**

**खि.२२.१२**

शयित्वा दण्डवद्भूमावञ्जलिं सम्प्रसार्य च।
क्रियेत यो नमस्कारः उच्यते दण्डसंज्ञितः।।

**स.४३.२२; ज्ञा.७३.१३४**

---

1. मस्तिष्कप्रणामवत्।

**६.७.४५.५ पञ्चाङ्गप्रणामोपचारः**

**स.४३.२० - २१**

पाणिं व्यत्यस्य बद्ध्वैव स्वस्तिबन्धनमेव वा।।

पादाङ्गुलिभ्यां जानुभ्यां ललाटेनावनिं स्पृशेत्।
पञ्चाङ्ग इति विज्ञेयः पञ्चाङ्गैः करणादधः।।

**ज्ञा.७३.१३४ ; खि.२२.१३**

**६.७.४६ देवस्य दक्षिणहस्ते दापनीयद्रव्याणि**

**वा.२४**

अर्घ्यमाचमनं चैव हविः पानीयमेव च।
मधुपर्कपुरोथानं (?)क्षीरं ताम्बूलसंज्ञिकम्।।

मुखवासमपूपानि नालिकेरफलानि च।
एतानि हस्ते देवस्य दक्षिणे तु निवेदयेत्।।

**६.७.४७ उद्वासनोपचारः**

**खि.२२.१२०**

पूजान्ते स्तुतिमन्त्रैश्च देवेष्टस्यानुमोदनम्।
भक्तिनिर्भरया बुद्ध्या स्यादुद्वासनविग्रहः।।

# ८. नित्यार्चने पूजाकालः

## ६.८.१ नित्यार्चनफलम्

**वा.२६**

धर्मार्थकाममोक्षार्थं चातुर्वर्ण्यसमृद्धिदम्।।

चतुर्युगसमृद्ध्यर्थं चातुराश्रमसिद्धिदम्।

**प्र.१८.२५३, २५४**

षट्कालं वा त्रिकालं वा द्विकालं कालमेव वा।।

पूजनं देवदेवस्य त्वैहिकामुष्मिकप्रदम्।

## ६.८.२ नित्यार्चने पूजाकालषट्कम्

**प्र.१८.२४९**

प्रत्यूषश्च प्रभातश्च मध्याह्नश्चापराह्नकः।
सायङ्कालो निशीथश्च पूजाकालास्तु षट् स्मृताः।।

**वा.२६.५२ ; स. १८. २४९**

## ६.८.३ पूजाकालषट्कस्य फलम्

**प्र.१८.२५० - २५३**

प्रातः कालेऽर्चनं कुर्यात् जपहोमाभिवृद्धये।

राजराष्ट्राभिवृद्ध्यर्थं मध्याह्नार्चनमिष्यते।।

सायङ्कालेऽर्चनं चैव सर्वसस्याभिवृद्धये।
उषःकालार्चनं प्रोक्तं प्रजापशुविवृद्धये।।

अपराह्णार्चनं चैव दैत्यनाशनहेतवे।
अर्धरात्रार्चनं प्रोक्तं चतुष्पादाभिवृद्धये।।

एवं षट्कालपूजायां फलमुक्तं विशेषतः।

### ६.८.४ आलये पूजाकालत्रिकम्

**खि. २४. २४**

देवालयेषु प्रशस्तं त्रिकालं पूजनं भवेत्।

### ६.८.५ पूजाकालस्य परिमाणम्

**ज्ञा.७१.१२९**

भास्करोदयात् पश्चात् आपञ्चनाडिकायाः प्रातरा मध्याह्नादाऽस्तमयाच्च पञ्चमयामे (?) तत् कालातीते पञ्चविंशतिविग्रहैः देवेशं बल्यधिदेवं च पूनयेत्।

### ६.८.६ पूजाकालपरिमाणत्रैविध्यम्

**स.४०.१३२**

उदयादथ मध्याह्नात्तथैवास्तमयाद्रवेः।
नाड्यस्तिस्रोथवा पञ्च सप्त वा काल उच्यते।।

### ६.८.७ पूजाकालपरिमाणस्य उत्तमादि त्रैविध्यम्

**क्रि.९.२२९, २३०**

उदयादथ मध्याह्नात् तथैवास्तमयाद्रवेः।

कालः स्यादुत्तमे यामः मध्यमे पञ्च नाडिकाः।।

यामार्धमधमे प्रोक्तो हविर्हीने तु तद्भवेत्।

**खि.२४. २५,२६**

### ६.८.८ उत्तमादिनित्यार्चनकालः

**खि.२४. २५, २६**

अर्कोदयाच्चामध्याह्नात्तथैवाऽस्तमयाद्रवेः।।

कालः स्यादुत्तमे यामो मध्यमे पञ्च नाडिकाः।
यामार्धमधमे प्रोक्तः पूजने मधुघातिनः।।

(अह्नि द्वादशनाड्यस्स्युः रात्रौ चेद्दश नाडिकाः।।)
पञ्च पञ्चैव घटिकास्सन्ध्याकाल उदाहृतः ?।।

उत्तमे पूजनाकालो दश पञ्च च नाडिकाः।
मध्यमे पूजनाकालः एकयाम उदीरितः।।

अधमे नाडिकाः पञ्च तिस्रो नाड्योऽधमाधमे।
उक्तसन्ध्यादिकालस्तु विज्ञेयस्त्वर्धयामकः।।

पूजनं सर्वदा सन्ध्याकालानतिक्रममाचरेत्।
सङ्गीतादिप्रवृत्तन्तत् सन्ध्यन्तरमथाचरेत्।।
उत्तमादिषु चैतेषु यथायोग्यं विधानवित् ?)

### ६.८.९ देवप्रबोधनकालः

**खि.२२.२४, २५, २८**

उषस्यपि च वाद्यैश्च घोषयेच्छङ्खपूर्वकम्।।

प्रबोधनीयं नाम स्याद्वाद्यं तत्काल एव तु।
प्रारभेतार्चनां प्रातरिति पूर्वजशासनम्।।

--------------------------

प्रविश्यान्तर्ध्वजस्थानात् देवदेवं प्रबोधयेत्।
भेरीपणवशङ्खादि सर्ववाद्यानि घोषयेत्।।

### ६.८.१० शङ्खघोषणस्य कालः

**खि.२२. १४८ - १५३**

पूजनारम्भकाले च स्नपने च विधानतः।
घण्टानादावसाने तु शङ्खध्वानञ्च कारयेत्।।

चतुर्विधैस्तथाऽन्यैश्च वाद्यैस्सम्यक् प्रघोषयेत्।
आनीयते यदा पक्वं हविः सिद्धं महानसात्।।

शङ्खघोषो विशेषेण तस्मिन् काले प्रकीर्तितः।
हविर्निवेदने काले शङ्खघोषपुरस्सरम्।।

वाद्यघोषोऽत्र विहितः बलिवाद्यं बलौ स्मृतम्।
नित्ययात्राबलौ सम्यक् सर्ववाद्यसमायुतः।।

तूर्यघोषस्तु कर्तव्यो भिन्नघोषैरनेकशः।
बल्युद्धरणवेलायां पूजान्ते शङ्खघोषणम्।।

घोष एवं यथाकालमन्यकालेषु चेष्यते।

### ६.८.११ प्रबोधनवाद्यस्य वादनकालः

**खि.२२.१५३, १५४**

उषस्यापि च वाद्यैश्च घोषयेच्छङ्खपूर्वकम्।।

प्रबोधनीयं नाम स्याद्वाद्यं तत्काल एव तु।
प्रारभेतार्चनां प्रातरिति पूर्वजशासनम्।।

### ६.८.१२ घण्टावादनस्य कालः

**खि.२२. १४७**

प्रतिद्रव्यं विशेषेण घण्टां सन्ताड्य पूजयेत्।
(हविः प्रदानकाले तु बहिर्घण्टां सुताडयेत्।
बलिकाले होमकाले धूपादौ तन्तुबन्धने
आवाहनेऽङ्कुरारोपे घण्टां वाद्यानि घोषयेत्।)

### ६.८.१३ निर्माल्यशोधनकालः

**खि.२०.१९८, १९९**

अतीतेऽहनि रात्रौ च पुष्पं निर्माल्यतामियात्।
तस्मात्सदा प्रातरेव निर्माल्यपरिशोधनम्।।

मालानामितरेषां च तत्तत्काले विसर्जनम्।
(उत्सवेष्वन्यकालेषु मालाश्चान्यास्समर्पयेत्)

### ६.८.१४ उपसन्ध्यापूजाकालस्य परिमाणम्

**क्रि.९.२३५**

उपसन्ध्यासु यामार्धं नाडिकास्तिस्र एव वा।

### ६.८.१५ पूजाकालस्य पूजाङ्गेषु विभाजनक्रमः

**क्रि.९.२३१ - २३४**

एका स्यात् द्रव्यसम्भारे सार्धैका स्नानकर्मणि।
घटिके द्वेऽर्चने स्याताम् एका स्याद्राजविग्रहे।।

घटिकार्धं हविर्दाने घटिकैका तथा बलौ।
शेषः शेषोपचाराणाम् इति यामे प्रकीर्तिताः।।

एका स्यात् द्रव्यसम्भारे एका स्यात् स्नानकर्मणि।
अर्चने घटिके स्याताम् एका स्याद्धविरादिषु।।

समांशा अधमे द्रव्यसम्भारे स्नापनेऽर्चने।
मध्यमं बलिहीनं स्यात् हविर्हीनं तथाऽधमम्।।

### ६.८.१६ नवधा पूजाकालविभागः

**वि.४२.२९१, २१२**

अर्कोदयान्मध्याह्नादस्तमयाच्च घटिका द्वादशादि चतुरन्तं नवधा भवति।। उदयात्पूर्वे घटिकात्रये प्रबोधवाद्यं घोषयति। तत्काले अर्चकाः परिचारकाश्चोत्थाय, स्नानसन्ध्योपासनादीनि कुर्युः।

उदयात्पूर्वे च एकघटिकायां कवाटोद्घाटनं कृत्वा, दीपसन्दीपनमार्जनोपलेपनादि कृत्वा, उदये देवं प्रणम्य, निर्माल्यशोधनं कृत्वा, पश्चादेकघटिकायां पात्रादिशुद्धिद्रव्यशुद्धि द्रव्यसम्भारं कृत्वा, ततो द्वये स्नानं पश्चात् त्रये हविरन्तमर्चनं यवनिकोद्धरणं च, ततश्चैकघटिकायां नीराजनकरणं, ततो घटिकाद्वये नृत्तगेयादिविनोदकरणं, ततश्चैकघटिकायां महाहविर्निवेदनं, होमं बलिप्रदानं च, बल्युद्धरणं, पश्चादेकघटिकायां प्रणामादिपुष्पाञ्जलिप्रदानं,

कवाटबन्धनं च कुर्यात्। मध्याह्नसायाह्नयोश्च घटिकाचतुष्टये विनोदकरणमिति विशेषः। एतदुत्तमोत्तममिति।

अर्चनानां घटिकाविहीनानां स्नानकाले नीराजनकाले विनोदकाले च युक्त्या सङ्कोचं कारयेत्।

उत्तममध्यमादि नवभेदेषु यत्कर्म विहीनं तद्विलोपयति, अन्यानि कर्माणि तत्तद्भेदस्योक्तनाडिकायां युक्त्या संयोज्य कारयेत्। हविर्हीने सर्वत्र घटिकाचतुष्टयमेव। घटिकात्रयं त्रिपादश्चेति केचित्। सर्वत्र सन्ध्यासु याममेव समाचरेदित्येके।

## ६.८.१७ आलयगोपुरकवाटोद्घाटनकालः

**खि.२४.२७**

उद्घाटयेत् गोपुरस्य कवाटावरुणोदये।।

## ६.८.१८ आवाहनोद्वासनकालः

**अ.२३**

प्रातरावाहनं कुर्यात् मध्यरात्रान्तमर्चयेत्।

अन्त्यवेलार्चनान्ते तु विसर्जनमथाचरेत्।
मध्ये विसर्जनं नेष्टं आवाहनमथान्तरे।।

**प्र.१८. २५४ , २५५**

षट्कालपूजने कुर्यादादावावाहनं बुधः।।

तथान्त्यवेलार्चनायां कुर्यादुद्वासनं परम्।

**क्रि. ९. १७**

नित्यार्चा बलियात्रान्ता यथाकालं विधीयते।

### ६.८.१९ अर्चनकालादिनाऽऽलयस्य उत्तमादित्रैविध्यम्

**ज्ञा.२९.५७**

चतुष्कालार्चनायुक्तं मूर्तीनां पृथक्पृथक्चतुष्कालं बहूपदंशदधि-सर्पिर्हव्यान्नबलिचतुष्कनृत्तगेयसमन्वितं विष्णुपञ्चकदिन पूजादियुत-मयनाब्दयुगान्तभूतसम्प्लवादिषु मासि मासि च स्नपनबल्युत्सवविस्तीर्णमेव-मुत्तमम्।

द्विकालमन्नबलिसंयुतं सायं अर्घ्यपुष्पबलियुतमयनादिषु कालेषु स्नपनोत्सवसंयुतं मध्यमम्।

मध्याह्ने प्रातः सायं च हव्यसंयुक्तं त्रिकालपूजनयुतं बलिहीनमहीनं वा कालोक्तस्नपनयुतमेतदधमम्।

एतेषु स्वशक्तितो भेदागममालम्ब्य लोभमोहविवर्जितो ब्राह्मेण विधानेन भगवन्तमनुस्मृत्य अन्यतमया आचार्याराधकपरिपूर्णभोगमात्मार्थमिति निश्चित्य तदर्हं मन्दिरमारभेत्।

# ९. नित्यार्चनोपक्रमः

## ६.९.१ विष्णुपूजा सर्वभ्रंशप्रायश्चित्तरूपा
## खि.२२.१७३ - १७८

विहिताकरणे चापि प्रायश्चित्तं हरिस्मृतिः।
यदि प्रमादाच्च्यवते कर्म यज्ञे प्रकुर्वताम्।।

तद्विष्णुस्मरणात्सद्यः भवेत्पूर्णमिति श्रुतिः।
ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु।।

प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः।
प्रातर्निशि च मध्याह्ने सन्ध्ययोस्सर्वदा स्मरन्।।

नारायणमवाप्नोति सद्यः पापक्षयं नरः।
किं पुनर्वैदिकं कर्म चाचरन् शक्तितः स्मरन्।।

योऽर्चयेद्विष्णुमेवं स्यात्कृतकृत्यो भवेद् द्विजः।
सर्वेऽपि वैदिकाचारास्सर्वे यज्ञास्तपांसि च।।

विष्णुपूजाविधेर्भेदास्तत्कर्मफलदो हरिः।
तस्मात्तत्पूजनं कुर्वन् स्वकृत्यान्न च्युतो भवेत्।

## ६.९.२ अर्चनाङ्गभूतानि चतुर्दश कर्माणि
## स.४४.५७ - ६४, ६५

------------- मनसा मन्त्रमुच्चरन्।

**क्रि. ९. १७**

नित्यार्चा बलियात्रान्ता यथाकालं विधीयते।

## ६.८.१९ अर्चनकालादिनाऽऽलयस्य उत्तमादित्रैविध्यम्

**ज्ञा.२९.५७**

चतुष्कालार्चनायुक्तं मूर्तीनां पृथक्पृथक्चतुष्कालं बहूपदंशदधि-सर्पिर्हव्यान्नबलिचतुष्कनृत्तगेयसमन्वितं विष्णुपञ्चकदिन पूजादियुत-मयनाब्दयुगान्तभूतसम्प्लवादिषु मासि मासि च स्नपनबल्युत्सवविस्तीर्णमेव-मुत्तमम्।

द्विकालमन्नबलिसंयुतं सायं अर्घ्यपुष्पबलियुतमयनादिषु कालेषु स्नपनोत्सवसंयुतं मध्यमम्।

मध्याह्ने प्रातः सायं च हव्यसंयुक्तं त्रिकालपूजनयुतं बलिहीनमहीनं वा कालोक्तस्नपनयुतमेतदधमम्।

एतेषु स्वशक्तितो भेदागममालम्ब्य लोभमोहविवर्जितो ब्राह्मेण विधानेन भगवन्तमनुस्मृत्य अन्यतमया आचार्याराधकपरिपूर्णभोगमात्मार्थमिति निश्चित्य तदर्हं मन्दिरमारभेत्।

## ९. नित्यार्चनोपक्रमः

### ६.९.१ विष्णुपूजा सर्वभ्रंशप्रायश्चित्तरूपा
### खि.२२.१७३ - १७८

विहिताकरणे चापि प्रायश्चित्तं हरिस्मृतिः।
यदि प्रमादाच्च्यवते कर्म यज्ञे प्रकुर्वताम्।।

तद्विष्णुस्मरणात्सद्यः भवेत्पूर्णमिति श्रुतिः।
ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु।।

प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः।
प्रातर्निशि च मध्याह्ने सन्ध्ययोस्सर्वदा स्मरन्।।

नारायणमवाप्नोति सद्यः पापक्षयं नरः।
किं पुनर्वैदिकं कर्म चाचरन् शक्तितः स्मरन्।।

योऽर्चयेद्विष्णुमेवं स्यात्कृतकृत्यो भवेद् द्विजः।
सर्वेऽपि वैदिकाचारास्सर्वे यज्ञास्तपांसि च।।

विष्णुपूजाविधेर्भेदास्तत्कर्मफलदो हरिः।
तस्मात्तत्पूजनं कुर्वन् स्वकृत्यान्न च्युतो भवेत्।

### ६.९.२ अर्चनाङ्गभूतानि चतुर्दश कर्माणि
### स.४४.५७ - ६४, ६५

------------- मनसा मन्त्रमुच्चरन्।

प्रविशेदालयं पूर्वं प्रतद्विष्णुरिति ब्रुवन्।।

चण्डोरगेशौ सम्पूज्य लब्धानुज्ञो यथाक्रमम्।
तयोरन्यतरेणैव सायं सम्प्रविशेत् पुनः।।

नादेयं वाथ ताटाक्यं कौप्यं वा जलमाहरेत्।
आत्मानं दापयेत्पूर्वं द्वितीयं प्रणिधापनम्।।

तृतीयं सम्भाराहरणं चतुर्थं शोधनं भवेत्।
पञ्चमं हरिसेनेशस्यार्चनं च यथाक्रमम्।।

षष्ठं ध्यानसमावेशः सप्तमं देववाहनम्।
सकलीकृतमव्यग्रं चाष्टमं च तथोच्यते।।

नवमं याचनं प्रोक्तं दशमं परिपूजनम्।
अर्चनं त्वर्घ्यदानाद्यैरेकादश सुभाषितम्।।

ततो द्वादशकं चेति परिवारसमर्चनम्।
यूथाधिपान्तं ज्ञेयं तत् त्रयोदशसमर्चनम्।।

चतुर्दशकमेतेषां सर्वेषां बलिदापनम्।
सप्तविंशतिभिर्भेदैस्तेषां तेषां यथाक्रमम्।।

अर्चनादर्चनं प्राह सुरासुरपितामहः।

## ६.९.३ पञ्चविधमर्चनम्

**क्रि.१०.५४ - ५६**

ध्रुवबेरार्चनं पूर्वं द्वितीयं शान्तपूजनम्।।

कौतुकाभ्यर्चनं पश्चात् भूतपीठार्चनं परम्।
पञ्चमं बलिपूजा स्यादेतैः पञ्चभिरर्चनैः।।

सम्पूर्णमर्चनं युक्तम् अयुक्तं विकलार्चनम्।
(पञ्च तुल्यफलान्याहुः अर्चनानि तपोधनाः)

### ६.९.४ ध्रुवबेरादीनामर्चने फलम्

**क्रि.१०.५६ - ६०**

ध्रुवबेरार्चनात् सिध्येत् सायुज्यं पदमक्षयम्।।

सर्वलोकाधिपत्यं वै सारूप्यं शान्तपूजया।
ऐहिकामुष्मिकं सर्वं भुक्त्वा सायुज्यमाप्नुयात्।।

कौतुकाभ्यर्च[illegible] भूतपीठार्चनात् ततः।
सर्वशत्रुजयं दीर्घमायुरारोग्यमेव च।।

[illegible] पुत्रसमृद्धिं च सालोक्यं पदमाप्नुयात्।
केपि विख्यातिं सामीप्यं बलिपूजया।।

तत्तत्प्रतिष्ठांकर्तॄणां तत्तत्फलमुदाहृतम्।

### ६.९.५ यजमानलक्षणानि

**प्र.१८.२६ - ३०**

यजमानस्सदाऽध्यात्मरतो मोक्षार्थचिन्तकः।
धनी सर्वसमस्त्यागी भक्तियुक्तः प्रसन्नधीः।।

शास्त्रोक्तेन विधानेन विष्णुलाञ्छनलाञ्छितः।
देवस्य नित्यपूजार्थम् उत्सवार्थं विशेषतः।।

तथान्यविभवार्थं च दापयेद्धनसञ्चयम्।
आचार्याज्ञाप्रतीक्षः स्यात् पूजके हितचिन्तकः।।

परिचारे प्रसन्नश्च किङ्करेषु दयापरः।
तीर्थप्रसादसेवी च निर्माल्येषु कृतादरः।।

इति लक्षणसम्पन्नाः प्रभवन्त्यालयार्चने।

## ६.९.६ अर्चकलक्षणानि

**खि.२२.१७८ - १८०**

मितभोजी जितक्रोधः ऋजुराचारसंयुतः।।

मन्त्रकल्पविशेषज्ञो भक्तिमान् नियतेन्द्रियः।
शुद्धात्मा सत्यसन्धश्च स्नानशीलश्च योगवित्।।

एवंगुणसमायुक्तः पूजकः शस्यते बुधैः।
सुखं स निवसेद्विद्वान् देवालयसमीपतः।।

**अ.२३ ; क्रि.९.२२ - २४ ; वा.२६**

**स.४०. ६ - ९ , ४३.११२ - ११४**

ऋत्विगुक्तगुणैर्युक्तो नित्यस्वाध्यायसंयुतः।

------------------------------

कल्पमन्त्रविशेषज्ञो वैष्णवः सुसमाहितः।।

गृहस्थो ब्रह्मचारी वा भक्त्यैवार्चनामाचरेत्।
यथोपनयनादग्नौ समिदाधानमर्हति।।

तथोपनयनादूर्ध्वं विष्णोरर्चनमर्हति।

--------------------------

देवेशमर्चयेन्नित्यमृत्विगुक्तगुणैर्युतः।।

मौनी शान्तः क्षमायुक्तो सूत्रोक्ताचारसंयुतः।
कल्पमन्त्रविशेषज्ञो वैष्णवः शास्त्रपारगः।।

निषिद्धाचारविमुखो भक्तिमान् नियतेन्द्रियः।
अनालस्यः सत्यवादी नित्यहोमपरायणः।।

आराधकश्च विष्णोस्तु ------------।

**खि.२०.२६**

**प्र.१८.२३, २४**

अलाभे तत्र सर्वेषामाचार्यं चार्चकान् पुनः।
वैखानसानेव वृणेन्न कुर्यादन्यसूत्रिणः।।

अवैखानसविप्रस्तु पूजयेदालये हरिम्।
स वै देवलको नाम सर्वकर्मबहिष्कृतः।।

**प्र. १७. १५ - १७**

आचार्यस्स्यादुपद्रष्टा देवसान्निध्यकारकः।
अर्चनाद्यखिलं कार्यं तन्नियोगेन कारयेत्।।

स हि कार्यस्य निर्णेता गोप्ता धर्मस्य देशिकः।

अर्चको देवदेवस्य कुर्यान्मन्त्रासनादिषु।।

उपचाराननन्तांश्च विधिना शास्त्रचोदितम्।

### ६.९.७ परिचारकलक्षणानि

**प्र.१८. १७ - २२, २५**

अर्चकस्य सहायस्तु किङ्करः परिचारकः।।

बहुकार्यकराश्चैते ग्राह्यास्तु परिचारकाः।
सम्मार्जनकरश्चैव तथा स्यादुपलेपकः।।

दीपोद्दीपयिता चैव पात्रशोधनकारकः।
पानीयवाहकश्चैव पुष्पावचयकारकः।।

धूपदीपादिकर्ता च गन्धपेषणतत्परः।
तत्तत्परिच्छदाहर्ता तथैव बलिवाहकः।।

एवमादीनि कार्याणि कुर्वन्ति परिचारकाः।
पाचकः परिचारस्स्यात्पचनालयसङ्गतः।।

हविष्पाकविधानज्ञश्शैचाऽचारपरायणः।
एतान्वैखानसानेव वृणेत्सर्वान् पदार्थिनः।।

----------------------------

परिचारांस्तु वृणुयादलाभे त्वन्यसूत्रिणः।
दीक्षितानेव सद्वृत्तानागमोक्तविधानतः।।

### ६.९.८ नित्यार्चने अर्चकसङ्ख्या

**खि.२०.२५**

यजमानो गुरुं चैव पूजनार्थं च पूजकान्।

द्वावेकं चतुरस्त्रीन्वा यथाविभवमाचरेत्।।

### ६.९.९ अर्चकस्य प्रातःकृत्यम्

**ज्ञा.६९.१२३**

यथोक्तैर्मन्त्रैः स्नात्वाऽऽचम्य, अग्निमुपस्थाय, देवान् ऋषीन् पितॄन् तर्पयित्वा, ब्रह्मयज्ञं कृत्वा, द्वादशभिः सूक्तैश्चतुर्वेदादिमन्त्रैः स्वाध्यायं करोति।

**खि.२०.३८, ३९**

**स.४०.६, ७**

[अत्र सावित्रीं जप्त्वा इत्यधिकम्।]

**नि.२२ ; य.३२.१, २**

**वि.४१.२७९**

मन्त्रेण स्नात्वा, आचम्य, कृतप्राणायामः सावित्रीं जप्त्वा सन्ध्यामुपास्य, देवादीनद्भिस्तर्पयित्वा, ब्रह्मयज्ञं कुर्यात्।

**वा.२६**

[ब्राह्मे मुहूर्ते उत्थाय इति विशेषः]

**क्रि.९.२४ - २७**

अर्चकः प्रातरुत्थाय देवेशं मनसा स्मरन्।।

शान्तिकं पौष्टिकं काम्यमिति भिन्नं त्रिधार्चनम्।

द्रव्यं तदनुरूपं च तदादानं च चिन्तयेत्।।

प्रातः स्नात्वाथ सावित्रीं जप्त्वा सन्ध्यामुपास्य च।
सूक्तानि ब्रह्मयज्ञान्ते जपेद्द्वादशसङ्ख्यया।।

तथाऽनुदितहोमी चेत् होमं कुर्यात् तथाग्निषु।
जुहोत्युदितहोमी चेत् प्रातस्सन्ध्यावसानके।।

अ.२३

प्र.१८.३० - ३५

अथार्चकः प्रसन्नात्मा पञ्चकालपरायणः।।

ब्राह्मे मुहूर्ते चोत्थाय नारायणमनुस्मरेत्।
कृत्वा सूत्रोक्तविधिना शौचादीनि यथाविधि।।

स्नात्वा स्नानविधानेन धृत्वा धौताम्बरे पुनः।
ऊर्ध्वपुण्ड्राणि सन्धार्य विधिना केशवादिभिः।।

धृत्वा पवित्रपद्माक्षतुलसीमणिमालिकाः।
धृत्वोभयपवित्रे च तथा सन्ध्यामुपास्य च।।

उष्णीषेण च पञ्चाङ्गभूषणैस्सुविभूषितः।
समाप्य नित्यकर्माणि महामन्त्रादिकं जपन्।।

अरुणं तु जपित्वैव नारायणमतः परम्।

## ६.९.१० आलयगमनम्

प्र.१८.३५ - ३७

प्रणम्य यन्त्रिकां चैव कराभ्यां परिगृह्य च।।

बाह्वोः शिरसि वा न्यस्य भक्त्या परमया युतः।

सङ्गतः परिचारैश्च यजमानेन सादरम्।।

सर्ववाद्यसमायुक्तः सर्वमङ्गलशोभितः।
क्रममाणः शनैर्विद्वान् देवागारं प्रति व्रजेत्।।

### ६.९.११ आलयप्रदक्षिणम्

**प्र.१८.३८ - ४०**

प्रतद्विष्णुरिति प्रोच्य चालयं परितः क्रमात्।
युग्मप्रदक्षिणं कुर्यात् देवदेवमनुस्मरन्।।

युग्मप्रदक्षिणं कुर्यात् अयुग्मं त्वाभिचारिकम्।
अयुग्मं तु परीत्यापि तथाऽयुग्मं प्रणम्य च।।

प्रेक्षेतोद्यन्तमादित्यं जपेद् द्वादशसूक्तकम्।
छायालङ्घनदोषस्तु न तत्र स्यात्प्रदक्षिणे।।

**य.३२.४, ५**

अस्ति चेच्छान्तभवनं तदन्तर्मण्डलेऽर्चकः।
न कुर्यात् प्रदक्षिणं चात्र नास्ति चेदथवा चरेत्।।

सन्ध्याकालं विनाऽन्यत्र पूजकश्चान्यभक्तकः।
न लङ्घयेद्विमानस्य छायां चेद्यद्यनर्थकृत्।।

### ६.९.१२ आलयप्रदक्षिणफलम्

**य.३२.६**

सायं प्रातस्तु सन्ध्यायां हरेर्धामप्रदक्षिणे।
फलं वक्तुमशक्यं तन्मया च ब्रह्मणापि च।।

## ६.९.१३ आलयप्रवेशः

**खि.२०.४० - ४५**

'प्रतद्विष्णुस्तवत' इति प्रविशेद्देवमन्दिरम्।
'अतो देवादिकं' जप्त्वा कुर्यात्सद्मप्रदक्षिणम्।।

'विमानं प्रपद्य' इत्युक्त्वा विमानं प्रणमेत्ततः।
'मणिकं प्रपद्य' इत्युक्त्वा मणिकं सम्प्रणम्य च।।

'निरस्तं रक्ष' इत्युक्त्वा यन्त्रिकां समुपाहरेत्।
कवाटे चैव संयोज्य 'हिरण्यपाणिम्' उदीरयन्।।

'दिवं विवृणोतु' इत्युक्त्वा कवाटोद्घाटनं चरेत्।
ततोऽभ्यन्तरं प्रविश्य 'अतो देवादि'मुच्चरन्।।

मुखं समीक्ष्य देवस्य प्रणम्यैवानुमान्य च।
त्रिः सम्प्रहार्य पाणिभ्यां 'शाम्यन्त्वि' ति समुच्चरन्।।

'भगवतो बलेन' मन्त्रेण प्रणमेद्देवमादरात्।

**स.४०.९ - १४ ; अ.२३; प्र.१८.४१ - ४३ ; वि.४१. २७९; क्रि.९.२८ - ३१ ; य.३२.२, ३. ७ - ९ ; वा.२६ ; प्र.१८. ४१ - ४५**

**ज्ञा.६९. १२३**

ततोऽभ्यन्तरं प्रविश्य ' अतो देवादि'ना देवस्य मुखमभिसमीक्ष्य 'शाम्यन्तु घोराणी'ति स्वपाणिना पाणिं त्रिः सम्प्रहार्य 'भगवतो बलेने'ति देवं प्रणम्य दीपानुद्दीप्य

**नि.२२**

### ६.९.१४ देवप्रबोधनम्

**खि.२४.२८**

प्रविश्यान्तर्ध्वजस्थानात् देवदेवं प्रबोधयेत्।
भेरीपणवशङ्खादिसर्ववाद्यानि घोषयेत्।।

### ६.९.१५ आलयशोधनम्

**खि.२४.२९, ३०**

आलयेऽन्तर्बहिश्चैव मार्जन्या शोधयेच्छुचि।
शुद्धोदकैः प्रोक्षयेच्च गोमयेनोपलपयेत्।।

कुर्युः पदार्थिनस्त्वेवमेष नित्यो हितो विधिः।

### ६.९.१६ आलयकर्मसु शिष्यनियोजनम्

**खि.२४.३२**

--------------- पश्चादाचार्यस्त्वथवाऽर्चकः।
शिष्यान् स्नातान् नियुञ्जीत स्वस्वकर्मस्वतन्द्रितान्।।

### ६.९.१७ दीपप्रज्वालनम्

**खि.२४.३३, ३४**

द्वारसंरोधनं कुर्यात् ततो यवनिकामुखात्।
शिष्यस्तूद्दीपयेद्दीपान् नित्यदीपादखण्डितात्।।
घृतेनापूरयेद्दीपान् कुर्यात्प्रज्वलितान् कृतान्।

## ६.९.१८ देवाय माङ्गलिकानां प्रदर्शनम्

### खि. २४. ३४ - ३६

नीत्वा यवनिकां देवस्याऽदर्शं कन्यकां गजम्।।

तुरगं गायकान् विप्रान् पुरतः स्थाप्य दर्शयेत्।
कर्पूरदीपेनैतद्धि विश्वरूपप्रदर्शनम्।।

सद्यस्सवत्सां गां दुग्धां क्षीरं धारोष्णमादरात्।
आनीय शर्करायुक्तं देवेशाय निवेदयेत्।।

### प्र.१८.४५ - ५१

आदर्शं गाश्च कन्याश्च हस्त्यश्वादीन् सुशोभनान्।।

ब्राह्मणान् वेदविदुषो नर्तकांश्चैव गायकान्।
देवस्य पुरतः स्थाप्य मुखमण्डप एव वा।।

प्रच्छन्नपटमुद्वास्य कृत्वा नीराजनं तथा।
सर्ववाद्यसमायुक्तं दर्शयेद्धरये मुदा।।

धारोष्णं चैव गोक्षीरं नवनीतं सशर्करम्।
देवेशाय निवेद्याथ कुर्याद्यवनिकां पुनः।।

'भूः प्रपद्ये' समुच्चार्य देवेशं प्रणमेन्मुहुः।
'परं रंहे' ति मन्त्रेण शयनस्थं श्रियः पतिम्।।

'भूरसि भूरिति' प्रोच्य जीवस्थाने निवेशयेत्।
तस्मिन् काले तु ये भक्त्या सेवन्ते पुरुषोत्तमम्।।

तेषां पुण्यफलं वक्तुं न शक्यं त्रिदशैरपि।

### ६.९.१९ अर्चकाय मात्रादानस्य विधिः

**खि.२४.३७**

मात्रां दद्यादर्चकाय कुर्याद्यवनिकां पुनः।

### ६.९.२० नित्यार्चनकर्मसु शिष्यनियोजनम्

**क्रि.९.३२**

देवदेवं प्रणम्याथ शिष्यान् स्वान् स्वेषु कर्मसु।
नियुञ्जीत यथायोगमृत्विगुक्तगुणान्वितान्।।

**अ.२३ ; खि.२०. ४५, २४.३२ ; प्र.१८.५१,५२**

### ६.९.२१ आलयशोधनम्

**य.३२.१३ - १५**

मार्जयित्वा तु मार्जन्या 'अवधूते' ति मन्त्रतः।।

'आशासु सप्त' इत्युक्त्वा प्रोक्षयेद् गोमयाम्भसा।
गर्भद्वारादि सर्वत्र द्वारे द्वारे विशेषतः।।

अर्धचन्द्रसमाकारं गोमयेनोपलेपयेत्।
गोचर्ममात्रं परितो भूतपीठस्य चैव हि।।

**प्र.१८. ५२ - ५४**

'अवधूत' मिति प्रोच्य गर्भगेहादि सर्वतः।।

मार्जन्या मार्जयेच्छिष्यः प्रादक्षिण्यक्रमेण वै।
पांस्वादीन् परिहृत्यापि प्राकारान्तं च सर्वशः।।

'आशास्वि'ति समुच्चार्य गोमयोनोपलेपयेत्।
पञ्चगव्यैस्तु सम्प्रोक्ष्य रङ्गवल्लीस्समाचरेत्।।

**स.४०.२१, २२ ; ४३.३८**

[पञ्चगव्यैर्वा इति विशेषः]

**अ.२३**

[पञ्चगव्यैः इति विशेषः पञ्चगव्यप्रोक्षणे 'आशासु सप्त' इति मन्त्रविनियोगः।]

**खि.२०.५३ , २४. २९, ३०. ३८ ; नि.२२ ; वा.२६ ;**
**वि.४१.२८० ; ज्ञा.६९.१२४; क्रि.९. ३७, ३८**

### ६.९.२२ पात्रशोधनम्

**प्र.१८. ५५**

अमावाजस्य मन्त्रेण यथोक्तेन विधानतः।
सर्वाण्यपि च पात्राणि शोधयेत्सुमनोरमे।।

**खि.२४. ३७, ३९ ; नि.२२; य.३२.१६ ; वा.२६**

**वि.४१.२८०**

[प्रणिध्यर्घ्यपात्रं हविःपात्राणि प्रक्षाल्य इति विशेषतया निर्देशः।]

**स.४३.३८**

### ६.९.२३ तीर्थाहरणम्

**खि.२०.४५ - ५१**

शिष्यमाहूय तत्काले तोयार्थं च नियोजयेत्।।

'दुहतां दिवम्', इत्युक्त्वा घटमादाय सोऽपि च।

बाह्वोश्शिरसि वा न्यस्य आहर्तुमुदकं व्रजेत्।।

नदीं तटाकं कूपं वा यथालाभं तथा व्रजेत्।
पूर्वालाभे परं गत्वा तोयमादाय चात्वरः।।

पिधाय वस्त्रखण्डेन कलशस्य मुखं ततः।
'आद्यमभिगृह्णामी' ति कुम्भं तोयेन पूरयेत्।।

पूर्ववन्मूर्ध्नि बाह्वोर्वा कलशं सन्न्यसेत्क्रमात्।
सर्वालङ्कारसंयुक्तं वाद्यघोषसमायुतम्।।

देवालयं शनैर्गत्वा प्रदक्षिणमथाचरेत्।
किञ्चिदैशान्यमाश्रित्य उत्तरे वा मनोरमे।।

'अन्तरस्मिन्निमे'त्युक्त्वा ब्रह्माणमभिवाद्य च।
'सोमं राजानम्' इत्युक्त्वा तोयकुम्भं सुसन्न्यसेत्।।

**स.४०.१४-१७ ; ज्ञा.६९.१२३ ; नि.२२ ;**

**य.३२.१० - १२ ; वि.४१.२८०**

**प्र.१८.५६ - ६१**

तोयसङ्ग्रहणार्थं तु नियुक्तः पूजकेन तु।
घटमादाय शिष्यस्तु 'दुहतां दिव'मुच्चरन्।।

नदीतटाककूपानां पूर्वालाभे परं व्रजेत्।
उपस्थाय जलं स्मृत्वा जाह्नवीं लोकपावनीम्।।

'आद्यमभिगृह्णामी'ति चाप्पवित्रेण वाससा।
गृहीत्वोत्पूतमाधावं गायत्रीमुच्चरन् पुनः।।

अलङ्कृत्य घटं सम्यक् क्षौमेनाच्छाद्य तन्मुखम्।
गजे शिरसि वा क्षिप्त्वा सर्ववाद्यसमायुतम्।।

पुनरालयमाविश्य कृत्वा चैव प्रदक्षिणम्।
'सोमं राजान' मुच्चार्य गर्भगेहे तु दक्षिणे।।

विन्यसेच्च ततः कुम्भं त्रिपादोपरि शोभिते।

**क्रि.९.३२ - ३६ ; वा.२६**

**अ.२३**

[प्रतिलोमसमीपेषु जलं न चाहरेत् इत्यधिकतया वर्तते इति विशेषः।]

## ६.९.२४ जलसंस्कारः

**स.४०.२०, २१**

सोमं राजानमित्युक्त्वा समादाय च तज्जलम्।
धारास्विति च मन्त्रेण तस्योत्पवनं चरेत्।।

इदमापः शिवेत्युक्त्वा तोयं तदभिमन्त्रयेत्।

**ज्ञा.६९.१२३ ; अ.२३ ; क्रि.९.३५ - ३७ ;**

**खि.२०.५२ ; प्र.१८.६३ ; य.३२.१२, १३**

**वि.४१.२८०**

धौतवस्त्रेण 'धारास्वि' ति तोयमुत्पूय उशीरादिगन्धैर्वासयित्वा 'इदमापश्शिवा' इति कुशेनाभिमन्त्रयेत्।

### ६.९.२५ तीर्थे गन्धद्रव्यमेलनम्

**वा.२६**

एलालवङ्गोशीरं च द्विकर्णी चम्पकं तथा।

एवमादीनि गन्धाश्च पूर्णकुम्भान्तरे क्षिपेत्।।

कुशदर्भैश्च वा ग्राह्य अभिमृश्य च मन्त्रवित्।

इदमापः शिवेत्युक्त्वा तत्र कार्यं समाचरेत्।।

**प्र.१८.६१ - ६३**

### ६.९.२६ पूजार्थजलस्य ग्राह्याग्राह्यत्वम्

**प्र. १९.६६, ६७**

कलुषं क्रिमिशैवालयुक्तं सूत्रविवर्जितम्।

गन्धवर्णरसैर्जुष्टम् अशुचिस्थानमाश्रितम्।।

पङ्काश्मदूषितं चैव सामुद्रं पल्वलोदकम्।

अग्राह्यमुदकं ग्राह्यम् एभिर्दोषैर्विवर्जितम्।।

### ६.९.२७ पुण्याहवाचनम्

**प्र.१८.६४**

सूत्रोक्तविधिना कृत्वा पुण्याहं विधिवत्तदा।

**खि.२५. ३८**

### ६.९.२८ निर्माल्यलक्षणम्

**ज्ञा.७३.१३४**

प्रातरर्चितानि पुष्पाणि उद्वासनान्ते रात्र्यन्ते वा निर्माल्यानि भवन्ति।

**खि.२०.१९८ ; वि.४१.२८६**

### ६.९.२९ निर्माल्यशोधनम्

**ज्ञा.६९.१२४**

'नश्यन्ति जगता'मिति देवस्य निर्माल्यं शोधयित्वा 'अहमेवेद'मिति पीठात् निर्माल्यमैन्द्रादीशानपर्यन्तमपोह्य 'पूतस्तस्ये'ति वेदिं परिमृज्य।

**वि.४१.२८० ; स.४०.२२, २३ ; अ.२३ ; क्रि.९.४७, ४८; खि.२०.५६ ; प्र.१८. ६५ , ६६ ; य.३२.१७**

**वा.२६**

[अत्र पादवेद्यादिमार्जने 'भूरग्नये' इति मन्त्रः विनियुज्यते।]

### ६.९.३० निर्माल्यविनियोगः

**खि.२०.५८ - ६०**

देवेशस्य तु निर्माल्यमादाय प्रयतात्मवान्।
विष्वक्सेनं समासाद्य पूजयेत्तु यथाविधि।।

निर्माल्यमन्यदेवानां शिष्य एव समाहरेत्।
आरामे तु विसृज्यैव पादप्रक्षालनं चरेत्।।

औत्सवादेस्तु निर्माल्यं प्रथमावरणे न्यसेत्।
'भक्तानां पापनाशार्थं ददामी'ति वदन् विधिः।।

**क्रि.९.४९ ; स.४०.२५, २६ ; ज्ञा.६९.१२४ ; अ.२३;**
**नि.२२ ; प्र.१८.६८ ; य.३२.१८ ; वा.२६ ;**
**क्रि. ९.४८, ४९ ; वि.४१.२८० , २८१**

**६.९.३१ यवनिकान्यासः**

**ज्ञा.७३.१३४**

अर्चनाकाले सर्वे प्रतिलोमा वेददूषकाः पाषण्डिनोप्यदृश्याः। तस्मात् प्रच्छन्नपटं कृत्वा।

**वि. ४१. २८२**

सूतादिप्रतिलोमाः, पतिताः, पाषण्डिनोऽपि अर्चनं हविर्निवेदनं च वीक्षितुं नैवार्हन्ति। तस्माद्यवनिकया समावृणोति।

**वा.२६**

प्रतिलोमान्त्यजातींश्च पाषण्डान् पापरोगिणः।
दीक्षितं तु दुराचारं चण्डालं गुरुनिन्दकान्।।

अङ्गहीनाधइकाङ्गांश्च केशहीनांस्तथैव च।
अर्चनादिक्रियाकाले वीक्षितुं नैव कारयेत्।।

तस्माद्यवनिकामग्रे विन्यसेन्मन्त्रवित्तमः।
प्रमादाद्दर्शने चैव तत्पूजा निष्फल भवेत्।।

**क्रि.२८.२३ - २६**

सूतादि प्रतिलोपाश्च पाषण्डाः पतितास्तथा।
नास्तिका भिन्नमर्यादा तथा वै वेददूषकाः।।

पापरोगयुताश्चैव तथैव गुरुनिन्दकाः।
अर्चनं देवदेवस्य हविर्दानं च वीक्षितुम्।।

नार्हन्ति तस्मात् कुर्वीत द्वारं यवनिकावृतम्।
महापातकिनां चापि सन्निधिं परिवर्जयेत्।।

तस्मात् द्वारसमायामं कुर्याद्यवनिकापटम्।

## ६.९.३२ आसनप्राणायामादि

**य.३२.१८ - ३०**

पश्चात्तदर्चको धीमान् पवित्रं धारयेत्तथा।।

चन्दनेन मृदा वाथ चोर्ध्वपुण्ड्राणि धारयेत्।
ऊर्ध्वपुण्ड्राधिपान् देवान् केशवादीन् प्रणम्य च।।

मातृकां पूर्ववन्न्यस्य चात्मानं भावयेद्धरिम्।
'ब्रह्म ब्रह्मान्तरात्मे'ति हृदयं चाभिमृश्य च।।

'द्यौः द्यौरसी'ति च शिरः 'शिखे'ति च शिखां ब्रुवन् ।
'स वेदा' इति मन्त्रेण कारयेत्कवचं स्वयम्।।

दक्षिणे तु भुजे वामे चक्रशङ्खौ स्मरेत्ततः।
ततश्चात्मसुरक्षार्थं धनुः पूर्वे सुसंस्मरेत्।।

शक्तिं च दक्षिणे पार्श्वे गदां चैवापरे तथा।
खड्गं वामे सुसन्न्यस्य चक्रमूर्ध्वे स्मरेद् बुधः।।

वासुकिं विदिशास्वन्यास्वस्त्राण्यन्यानि पूर्ववत्।
फडन्तं च स्मरेद्देवं पाणिना दक्षिणेन च।।

'विष्णुस्त्वा'मिति रक्षां वा श्रुतिरस्ति तथा स्मरेत्।
'सूर्योऽसी'ति च सव्ये वै 'चन्द्रोऽसी'ति च वामतः।।

सन्न्यस्य चक्षुषोर्धीमान् बीजमादिं हृदि न्यसेत्।
आभुरण्यं विधिं यज्ञं ब्रह्माणं चेन्द्रमित्यपि।।

अङ्गुष्ठादिकनिष्ठान्तं संस्पृश्यैवाधिदेवताः।
हस्तयोस्तलयोः स्मृत्वा मण्डले सूर्यसोमयोः।।

'अन्तरस्मिन्निम' इति प्रकोष्ठौ चाभिमर्शयेत्।
'ब्रह्मैव भूत' मित्युक्त्वा तं देवं भावयेत्स्वयम्।।

गुरूपदेशमार्गेण प्राणायामं चरेत्ततः।
उत्थाय तस्माद्धर्मात्मा विष्णुगायत्रिया पुनः।।

ध्रुवस्य पादयोर्मध्ये मूर्तिमन्त्रैश्च पञ्चभिः।
पादपुष्पं च दत्वाऽन्ते कौतुकं सम्प्रणम्य च।

**क्रि.९.३९ - ४६**

पद्मासने समासीनः शुचिर्ब्रह्मासनाञ्जलिः।
पूजकः पुरुषो विष्णुः जितमन्युः जितेन्द्रियः।।

सोर्ध्वपुण्ड्रः सोत्तरीयः सोष्णीषः सपवित्रकः।
तत्तन्मन्त्रं समुच्चार्य धृत्वा पञ्चाङ्गभूषणम्।।

'अन्तरस्मिन्निम' इति ब्रह्माणं हृदि संस्मरेत्।
'ब्रह्म ब्रह्मे'ति मन्त्रेण हृदयं त्वभिमृश्य च।।

'द्यौः द्यौरसी'ति मन्त्रेण शिरस्समभिमृश्य च।
'शिखे उद्वर्तयामी'ति शिखामुद्वर्तयेत् सकृत्।।

रक्षां सर्वत्र कृत्वा तु 'देवानामायुधै'रिति।
'सुदर्शनमभी' त्युक्त्वा दक्षिणे तु सुदर्शनम्।।

'रविपा'मिति वामे च शङ्खं च बिभृयात्करे।
'सूर्योऽसि चन्द्रोऽसी'त्युक्त्वा नेत्रयोर्दक्षवामयोः।।

रवीन्दुमण्डले पाण्योः दक्षिणोत्तरयोः न्यसेत्।
अकारं हृदये न्यस्य प्रणवैरपि वेष्टयेत्।
अङ्गुष्ठादिकनिष्ठान्तं 'आभुरण्यं विधिं' तथा।।

'यज्ञं ब्रह्माण'मित्युक्त्वा 'देवेन्द्र'मिति च न्यसेत्।

**स.४०.१८ , १९**

[शंनो वातेति शान्तिजपः अधिकः।]

**ज्ञा.६९.१२३ ; अ.२३ ; नि.२२ ; वि.४१.२८० ; वा. २६**

**प्र.१८.९९ - १०९**

ततोऽर्चकः प्रसन्नात्मा ध्यात्वात्मानं जनार्दनम्।
देवस्य दक्षिणे भागे कूर्मपीठे समाहितः।।

बिम्बार्हं संस्थितो वापि समासीनोऽथवा पुनः।
ध्यात्वा ध्यानविधानेन जप्त्वाऽचार्यपरम्पराम्।।

योगशास्त्रोक्तमार्गेण प्राणायामादिकं चरेत्।
भूतशुद्धिं विधायादौ न्यासानन्यांत्समाचरेत्।।

अकारादिक्षकारान्तमक्षराणि यथाविधि।
सर्वत्र सन्धिषु न्यस्य ब्रह्मन्यासं समाचरेत्।।

'ब्रह्म ब्रह्मान्तरात्मे' ति हृदयं चाभिमर्शयेत्।
'द्यौर्द्यौरसी' ति चोच्चार्य मूर्धानं चाभिमर्शयेत्।।

'शिखे उद्वर्तयामी'ति स्पृशेच्चैव शिखां तथा।
'देवानामायुधै'रुक्त्वा कवचं बन्धयेत्ततः।।

'नारायणाय विद्महे' इति दशदिग्बन्धनं चरेत्।
'सुदर्शनमभी'त्युक्त्वा दक्षिणे तु सुदर्शनम्।।

'रविपा'मिति वामे च शङ्खं च बिभृयात्करे।
'सूर्योसि चन्द्रोसी'त्युक्त्वा नेत्रयोर्दक्षवामयोः।।

सूर्याचन्द्रमसोश्चैव मण्डले सन्न्यसेद् बुधः।
'आभुरण्यं विधिं यज्ञं ब्रह्माणं देवेन्द्र'मित्यपि।

अङ्गुष्ठादिकनिष्ठान्तं करन्यासं समाचरेत्।
'अन्तरस्मिन्निम' इति ब्रह्माणं च हृदि न्यसेत्।
प्राणानायम्य सङ्कल्प्य तिथिवारादि कीर्तयेत्।

**वा.२६**

सुचन्दनादिभिर्द्रव्यैरूर्ध्वपुण्ड्रञ्च सुन्दरम्।
धारयेत् पवित्रञ्च हस्ताभ्यामङ्गुलीयके।।

स्वस्तिकासनमास्थाय प्राङ्मुखो वाप्युदङ्मुखः।
सुस्थितो वापि बिम्बार्हं देवदेवं प्रणम्य च।।

पीठे वा विष्टरे चैव तदूर्ध्वे चानयेद्बुधः।
एवं कृत्वासने भूत्वा कारयेदिति केचन।।

प्राणायामं ततःकृत्वा इडापिङ्गलया क्रमात्।
अकारादि क्षकारान्तं न्यसित्वा सर्व सन्धिषु।।

प्रथमं हृदये न्यस्य द्वितीयञ्च शिरस्तथा।
तृतीयञ्च शिखां चैव चतुर्थं कवचाय हुम्।।

नयने पञ्चमं विद्यात् षष्ठमस्त्राय वै क्रमात्।
पृथक्चैवाङ्गं संस्पृश्य मन्त्रेणैव तु सन्यसेत्।।

ब्रह्म ब्रह्मान्तरात्मेति हृदयस्याभिमर्शनम्।
द्यौर्द्यौश्च शिरसि न्यस्य शिखा इति शिखां स्पृशन्।।

सकृद्देवानामित्युक्त्वा कवचं वै विनिर्दिशेत्।
नारायणाय विद्मेति दशदिग्बन्ध इष्यते।।

सूर्योसीति च मन्त्रेण दक्षिणे नयनस्य च।
चन्द्रोसीत्यादिना चैव न्यसित्वा वामनेत्रके।।

बीजं च हृदये न्यस्य प्रणवैरपि वेष्टयेत्।
शङ्खं चक्रं न्यसेच्चैव दक्षिणोत्तरपार्श्वयोः।।

अङ्गुष्ठादि कनिष्ठान्तं क्रमेणैव तु विन्यसेत्।
आभुरण्यं विधिं यज्ञं ब्रह्माणं देवमित्यपि।।

अन्तरस्मिन्निमेत्युक्त्वा स्मरेद्ब्रह्माणमादरात्।
कुर्यादर्चनकाले तु पूर्वं सङ्कल्पमुच्यते।।

ऋषिच्छन्दोधिदेवांश्च स्मरेच्चैव तु मन्त्रवित्।
ऋषिर्नारायणश्चेति परमात्माधिदैवतम्।।

अनुष्टुप्छन्दो विशेषेण शृणुध्वमृषिसत्तमाः।
ओङ्कार बीजमित्युक्तमकारश्शक्तिरुच्यते।।

### ६.९.३३ अर्चकेण भूतशुद्ध्याचरणम्

**खि.२४.३९**

आत्मने भूतशुद्धिं च योगमार्गेण कारेयत्।

### ६.९.३४ पूजाद्रव्याणां सम्भरणम्

**वा.२६**

सर्वद्रव्यांश्च सङ्गृह्य चषकाद्यादिपूर्वकम्।
चन्दनं चागरुं चैव एलं चोशीरमेव च।।

कर्पूरं कुङ्कुमं चैव व्यजनं छत्रसंयुतम्।

श्रीपत्रामलकं चैव जातितक्कोलमेव च।।

जम्बीरादिफलं चैव मण्डतक्रं तथैव च।
सूकरस्य च केशं च तिन्त्रिणीफलसंयुतम्।।

शिलाचूर्णं हरिद्रां च गलन्तीं च समाहरेत्।
जिह्वायाश्शोधकं चैव वस्त्रभूषणमेव च।।

पवित्रं शाटकं चैव पुष्पं यज्ञोपवीतकम्।
चूलिनं शङ्खपद्मं च करकं च घटं पुनः।।

तैलं सहस्रधारां च ताम्बूलं मधुपर्ककम्।
सङ्गृह्य चषकं चैव धूपदीपादिपात्रकम्।।

पादुकं दर्पणं चैव तण्डुलं व्रीहिसंयुतम्।
माषैश्च सर्षपैर्युक्तं दूर्वां चैव यवास्तथा।।

कुशाग्रं तिलसंयुक्तं प्रत्येकं च समाहरेत्।
अर्घ्यद्रव्याणि चाष्टौ तु सम्भरेन्मन्त्रपारगः।।

गुग्गुल्वगरुकोष्ठादीन् धूपार्थं तु समाहरेत्।
घृतं वा तैलमथवा दीपार्थं तु समाहरेत्।।

कुडुबसम्पूर्णपात्राणि गृहीत्वा भूतसङ्ख्यया।
कुशाग्राक्षतकूर्चं च पृथक्पात्रे विनिक्षिपेत्।।

**वि.४१. २८२**

आवाहनपाद्याऽऽचमनस्नानोदकार्थाश्चतस्रः प्रणिध्योर्द्वे च एकैकं वा, गृहीत्वा, साक्षतका (कु) शकूर्चान् विक्षिप्य, अद्भिः प्रणवेन पूरयित्वा, कुडुब-

सम्पूर्णाऽर्घ्यपात्राणि सौवर्णराजतताम्रमृण्मयकास्याऽन्यतमानि पञ्च, अलाभे, तदेकं वा, तद्देवं चन्द्रमभ्यर्च्य, पात्राणि संशोध्य, तण्डुलव्रीहीमाषसर्षपमिश्रितम् अक्षतं प्राहुः।

तत्पूर्वं सिद्धार्थकं, तिलं, कुशाग्रं, दधिक्षीरघृतं च, प्रक्षिप्य, गायत्र्याऽऽधावेन पूरयति, अर्घ्यमेतत् पात्रे पुष्पाण्यादाय, जलेन पिष्टं चन्दनं, गन्धगुग्गुल्वगरुकोष्टचन्द्रनधनगुलमिश्राणि यथालाभं धूपार्थं, पिचुवर्तियुतं घृतेन तैलेन वा दीपं वा, सम्भारान् सम्भरति।

### ६.९.३५ सम्भारप्रोक्षणम्

**खि.२०.५४, ५५**

सौवर्णं राजतं ताम्रं कांस्यं मृण्मयमेव वा।
पात्रं तोयैः पञ्चगव्यैः पूरयित्वा यथोदितम्।।

'आशासु सप्तसु' इत्युक्त्वा कूर्चयुक्तेन पाणिना।
प्रोक्षयेत्सर्वसम्भारान् बाह्यमाभ्यन्तरं क्रमात्।।

**प्र.१८.६४**

[अत्र सम्भारप्रोक्षणे 'शुची वो हव्यम्' इति मन्त्रप्रयोगः।]

### ६.९.३६ द्रव्याधिदेवार्चनम्

**क्रि.९.१०८ - १२२**

आसने चैवमासीनः सम्भृत्य द्रव्यसञ्चयम्।।

तत्तद्द्रव्याधिदेवांस्तान् तत्तद्द्रव्यसमीपतः।

तत्तद् द्रव्यधरान् स्मृत्वा पूजयेत्तु यथाविधि।।

आसनस्य भवेद्धर्मो जलस्य वरुणः स्मृतः।
पुष्पे तु हरितः प्रोक्तो गन्धे तु पृथिवी मता।।

धूपे बृहस्पतिः प्रोक्तो दीपे तु श्रीरुदाहृता।
अर्घ्यपात्रे स्मृतः सोमः शुक्रोर्घ्याधिपतिः स्मृतः।।

उद्दिष्टानामथार्घ्यस्य द्रव्याणामधिदेवताः।
सिद्धार्थस्य भवेत् सोमः कुशाग्रस्याथ जाह्नवी।।

तिलस्य पितरो ज्ञेयाः तण्डुलस्य रविर्भवेत्।
यजुर्वेदोऽधिपो दध्नः क्षीरस्याथर्ववेदकः।।

अक्षते काश्यपः प्रोक्तः जलस्य वरुणः स्मृतः।
प्लोते त्वष्टाऽम्बरे सूर्य उत्तरीये निशाकरः।।

भूषणे षण्मुखः प्रोक्तो वह्निर्यज्ञोपवीतके।
छत्रे शेषस्तथा वायुः चामरव्यजनादिषु।।

दर्पणे चन्द्र उद्दिष्टः चतुरङ्गेषु पक्षिराट्।
नृत्ते शर्वः तथा गाने सामवेदोऽधिदैवतम्।।

वाद्ये नन्दीश्वरः प्रोक्तः स्मृत्वा तान् मनसार्चयेत्।
स्त्रीषु नृत्ताभियुक्तासु जयाद्यप्सरसोऽर्चयेत्।।

ऋग्वेदो मधुपर्कस्य शर्वो मात्राधिपः स्मृतः।

हविः पात्राधिपः सूर्यो हविषां कमलासनः।।

मुखवासाधिपा भूमिर्यानेषु गरुडः स्मृतः।
वरुणः शङ्खकुक्षौ तु तन्मूले पृथिवी मता।।

सर्वतीर्थास्तु धारायां चन्द्रः शङ्खाधिदैवतम्।
घण्टाया अधिपो वेधाः तज्जिह्वायां षडाननः।।

घण्टानादे महादेव इति ध्यात्वा समर्चयेत्।
पानपात्रेषु सर्वेषु सोम एवाधिदेवता।।

उपहारादिभोज्यानां पात्रेषु च दिवाकरः।
(त्रिमूर्तयः त्रिपादे स्युः वलयं चन्द्रदैवतम्।)
अथवा कारयेच्छिष्यैः द्रव्याधिपसमर्चनम्।।

**वा.२८**

अतः परं प्रवक्ष्यामि अर्चनस्याधिपक्रमम्।
आसनं पृथिवी ज्ञेया पादुकं च खगाधिपम्।।

अपां वरुणदैवत्यं पुष्पाणां सुन्दरं तथा।
गन्धानां पृथिवी ज्ञेया धूपानां श्रीरुदाहृता।।

दीपस्य रुद्रो विज्ञेयः अर्घ्यस्य च शचीपतिः।
उद्दिष्टानामथार्घ्यस्य द्रव्याणामधिदेवताः।।

पृथक् पृथक् प्रवक्ष्यामि यवादीनामनुक्रमात्।

यवस्य मेदिनी प्रोक्ता सर्षपस्याग्निदेवता।।

माषस्य काम उद्दिष्टः व्रीहीणां सोम एव च।
तिलस्य पितरो ज्ञेयाः तण्डुलस्य रविर्भवेत्।।

सिद्धार्थकस्य वेदाश्च कुशाग्रस्याथ जाह्नवी।
प्लोतवस्त्रस्य त्वष्टारं भूषणस्यापि षण्मुखः।।

उत्तरीये तथा दक्षश्चन्द्रो यज्ञोपवीतके।
खड्गचापौ विराट् चैवं चन्द्रमा दर्शनस्य च।।

चामरेऽनिलदैवत्यं छत्रस्यानन्तदेवता।
यानानामधिदैवत्यं खगाधिप इति स्मृतः।।

महाशब्दं तु पञ्चानां पृथिव्यादीन्यथाक्रमम्।
दानद्रव्याधिपान् वक्ष्ये ऋषयश्च तथा भवेत्।।

मण्डलं भूमिदैवत्यं अलङ्कारं च वासुकिम्।
परिवारं तथाभ्यर्च्य भास्करन्तु विशेषतः।।

हविर्ब्रह्माणमुद्दिष्टं आज्ये विष्णुरुदीरितः।
उपदंशाः सरस्वत्या गुडं विघ्नेशमादिशेत्।।

ऋग्वेदश्च समाज्ञेयः मधुपर्कस्य देवता।
पानीयं वसुदैवत्यं ताम्बूले श्रीरुदाहृता।।

पवित्रं पात्रमूले तु कुक्षौ सारस्वतं तथा।

अग्रे सरस्वतीं चैव पात्राणामधिदेवता।
शङ्खं चन्द्राधिदैवत्यं वरुणं चोदरे तथा।।

मेदिनी तस्य पृष्ठस्य तीर्थाः सर्वास्तदग्रतः।
वलयं वासुकिर्ज्ञेयं त्रिपादस्याग्निदेवता।
मार्जन्या मरुतश्चैव सागरं प्रोक्षणे तथा।।

अग्रं ब्रह्माधिदैवत्यं ग्रन्थिर्विष्णुस्तथैव च।
शेषमीश्वरदेवत्यं कूर्चानामधिदैवतम्।।

महाघण्टाधिदैवत्यं वक्ष्यते च यथाक्रमात्।
घण्टाया ब्रह्मदैवत्यं मुकुले तु त्रिनेत्रकम्।।

सूत्राणां च महानागं स्वरं चैव सरस्वती।
नादं प्रजापतिं विद्यात् घण्टायाश्चाधिदैवतम्।।

एवं क्रमेण चावाह्य चार्चयित्वा विचक्षणः।
विपरीतं चरेद्विद्वान् विनश्यति न संशयः।।

इति सङ्क्षेपतः प्रोक्तं शृणुध्वं द्विजसत्तमाः।

**क्रि..२८.१ - ६**

पात्राणामर्चनाङ्गानां नवानां द्विजसत्तमाः।
वक्ष्यामि शुद्धिसंस्कारं  कृत्वा तं सम्यगाहरेत्।।

लौहानामर्घ्यपात्राणां हविः पात्रस्य चैव हि।

तथाऽऽचमनपात्राणां पाद्यार्थानां तथैव च।।

स्नानावाहनपात्राणां बलिपात्रस्य चैव हि।

नीराजनार्थपात्राणां धूपदीपार्थपात्रयोः।।

सहस्रधारापात्रस्य शङ्खपद्माङ्कपात्रयोः।

लौहानां कलशादीनां त्रिपादानां तथैव च।।

सलक्षणानि कृत्वेतान्यद्भिर्मृद्भिश्च शोधयेत्।

वास्तुहोमं ततो हुत्वा पर्यग्निकरणं तथा।।

पञ्चगव्योक्षणं कृत्वा धान्यपीठोपरि न्यसेत्।

तत्तद्देवांत्समावाह्य समभ्यर्च्य निवेदयेत्।।

**प्र.१८.६८ - ९८**

पूजनार्थांश्च सम्भारान् यथाशक्ति ससम्भरेत्।।

ततः समाहितो भूत्वा सम्भारार्चनमारभेत्।

तत्तत्स्थानेषु पात्राणि यथार्हं स्थापयेद्बुधः।।

स्नानार्थमग्निकोणे स्यात् अर्घ्यार्थं नैऋतेऽपि च।

पाद्यार्थं वायुदेशे स्यात् आचमार्थमथेशके।।

शुद्ध्यर्थमेकं मध्ये तु पञ्चपात्रमिदं क्रमात्।

त्रिपादोपरि निक्षिप्ते विशाले ताम्रभाजने।।

अग्निश्शुचीति मन्त्रेण स्थापयेच्च हरिं स्मरन्।

कुर्याच्च पात्रसंस्कारं शोषणादिं यथाविधि।।

उद्धरिण्यां गृहीत्वा तु प्रणवेन जयं तदा।
निक्षिप्य तुलसीं तस्यां पुष्पं वा धारणं चरेत्।।

वारिकुम्भमुखे ब्रह्मा तदधो रुद्र ईरितः।
वरुणस्तु जले ध्येयः तथैवावाहनं चरेत्।।

त्रिपादे चन्द्रमावाह्य चादित्यं चोर्ध्वभाजने।
वसिष्ठसोमयज्ञाङ्गान् इन्दुं चन्द्रं क्रमेण वै।।

आग्नेयादिक्रमेणैव पञ्चपात्रेषु चाह्वयेत्।
कर्पूरोशीरकं चैव गन्धानेलालवङ्गकम्।।

स्नानद्रव्यमिदं प्रोक्तं स्नानपात्रे तु निक्षिपेत्।
विष्णुपर्णं पद्मदलं दूर्वां श्यामाकमेव च।।

पाद्यद्रव्याणि सम्पाद्य पाद्यपात्रे तु निक्षिपेत्।
कुशाक्षततिलव्रीहियवमाषांस्तथैव च।।

प्रियङ्गुंश्चैव सिद्धार्थान् अर्घ्यपात्रे तु निक्षिपेत्।
एलोशीरलवङ्गादींस्तक्कोलानीति च क्रमात्।।

क्षिपेदाचामपात्रेषु शुद्धतोये ततः क्रमात्।
पुष्पाणि गन्धान् विन्यस्येत् यथालाभमथापि वा।।

अलाभे तत्तदुच्चार्य तुलसीं वा विनिक्षिपेत्।

धारास्विति च मन्त्रेण पात्राण्यद्भिः प्रपूरयेत्।।

'इदमापः शिवाः' प्रोच्य सुरभिमुद्रां प्रदर्श्य च।
पात्राभिमन्त्रणं कुर्यात् दशदिग्बन्धनं चरेत्।।

विष्णुगायत्रीमुच्चार्य तत्र कार्यं समाचरेत्।
घण्टायां चैव ब्रह्माणं नादे वेदान् समर्चयेत्।।

तज्जिह्वायां षडास्यस्तु सूत्रे नागान् समर्चयेत्।
ऊर्ध्वे वीशं, च शङ्करी पार्श्वयोस्तस्य चार्चयेत्।।

नाले चैव महादेवं इति घण्टाधिदेवताः।
त्रिपादस्योत्तरे स्थाप्य विमलं तु पतद्ग्रहे।।

वरुणं शङ्खकुक्षौ तु मूले तु पृथिवीं तथा।
धारायां सर्वतीर्थांश्च शङ्खे चन्द्रं समर्चयेत्।।

उद्धरिण्यां च पानीयपात्रे सोममथार्चयेत्।
आसने धर्ममावाह्य, प्लोते त्वष्टारमेव च।।

अम्बरे सूर्यमावाह्य चोत्तरीये निशाकरम्।
भूषणे षण्मुखं चैव यज्ञसूत्रे निशाकरम्।।

पुष्पे पुलं तथा गन्धे मुखवासे च मेदिनीम्।
अक्षते काश्यपं धूपे बृहस्पतिमथार्चयेत्।।

दीपे श्रियं घृते साम तैले पितॄन्त्समर्चयेत्।
उपधाने तथा छत्रे पादुके शेषमर्चयेत्।।

यन्त्रिकायां च मार्ताण्डं सिद्धार्थे सोममर्चयेत्।
कुशाग्रे जाह्नवीं चैव तिलेषु पितृदेवताः।।

तण्डुले रविमावाह्य दध्नि चावाहयेद्यजुः।
क्षीरेऽथर्वाणमावाह्य मधुपर्के ऋचं तथा।।

मात्रायां शर्वमावाह्य हविः पात्रे दिवाकरम्।
हविःषु पद्मगर्भं च पानपात्रे निशाकरम्।।

उपहारादि पात्रेषु दिवाकरमथार्चयेत्।
ज्येष्ठामावाह्य मार्जन्यां नर्तके शर्वमर्चयेत्।।

गायके सामवेदं च नन्दीशं वादकेऽर्चयेत्।
पाञ्चजन्यं च शङ्खे तु गणिकास्वप्सरः स्त्रियः।।

गरुडं परिचारेषु समावाह्य ततः क्रमात्।
अनुक्तेषु तु द्रव्येषु विष्णुमावाह्य कारयेत्।।

तत्तद्द्रव्याधिपं स्मृत्वा तत्तद्द्रव्यसमीपतः।
तत्तद्द्रव्यधरत्वेन चतुर्भिर्विग्रहैर्यजेत्।।

तत्तत्कर्मसु काले वै यथार्हमुपयोजयेत्।
तत्कालेऽप्यथवाऽऽवाह्य तस्मिन् कर्मणि योजयेत्।।

### ६.९.३७ हविष्पाकः शिष्यकर्तृकः

**नि.२२**

हविष्पात्राणि सङ्गृह्य हविष्पाकोक्तवत्सुधीः।
पचेद्धवींषि सर्वाणि चोपदंशसमायुतम्।।

**स.४०. १७ ; य.३२. १६ ; वा.२६ ; वि.४१. २८०**

## १०.हविष्पाकः

### ६.१०.१ पचनालयस्थानम्

**प्र.१९.६१**

द्वितीयावरणे प्रोक्तम् आग्नेय्यां पचनालयम्।

अर्चकस्य गृहे वापि पाचयित्वा निवेदयेत्।।

**स.४५.३६**

**वि.४३.२९३**

द्वितीयावरणे प्रथमे वा आग्नेय्याम्।

### ६.१०.२ पचनालयस्वरूपम्

**स.४५.३६ - ३८**

दीर्घशालां प्रकुर्वीत दक्षिणोत्तरमायताम्।।

विमानेन समं वापि विमानात् पादहीनकम्।

सार्धं कपोततुल्यं वा पादाग्रसममेव वा।।

यथाशक्त्या प्रकुर्वीत चुल्लीं चैव सुकारयेत्।

**वा.२९**

अत ऊर्ध्वं प्रवक्ष्यामि हविः पाकविधिक्रमम्।

पचनालयदेशं च तत्प्रमाणं तथैव च।।

स्तम्भसङ्ख्याद्यलङ्कारं बोधिकोत्तरपङ्क्तिषु।
तस्य द्वारप्रमाणं तु चुल्ल्यास्थानं तथैव च।।

जलसञ्चयसंस्थानं तथैवेन्धनसंचयम्।
नित्याग्निकुण्डसंस्थानं धान्यतण्डुलसंचयम्

संचयं सोपदंशानि मरीचजीरकसर्षपैः।
लवणस्य घृतस्यैव दध्यादि च गुलं मधु।।

एषां संचयसंस्थानं पूर्वमेव प्रचोदितम्।
परं त्वो रुद्र धान्यादीन् वर्जयित्वा विचक्षणः।

**वि.४३.२९३**

### ६.१०.३ हविषः कृते उपादेयानि धान्यानि

**वि.४३.२९३**

वेणुकान् यवान् षाष्टिकान् नीवारान् प्रियङ्गुश्यामकान् व्रीहीन्वापि एकजातीयान् चतुर्वर्णैरेवानयेत्। एतेषां पूर्वं पूर्वं श्रेष्ठम्।

**स.४५.१, २ ;  ज्ञा.७५.१३९**

### ६.१०.४ धान्यानां उत्कर्षतारतम्यम्

**स.४५.३,४**

सर्वेषां व्रीहिकाणां च शालिर्दशगुणो भवेत्।।

शतगुणं प्रियङ्गु स्यात् नीवारं तु सहस्रकम्।
अयुतं गर्भषष्टं स्यादनन्तं यववेणुके।।

**ज्ञा.७५.१३९**

### ६.१०.५ अग्राह्यणि धान्यानि

**वि.४३.२९३, २९४**

तस्मात् वरककोद्रवादिकुधान्यानि प्रतिलोमानि तानि च वर्जयेत्।

**स.३.५ - ६, ७**

व्रीहीणामपि सर्वेषां कृष्णधान्यं विवर्जयेत्।

--------------------------------।।

अन्त्यजैः प्रतिलोमैश्च नीतं धान्यं विवर्जयेत्।

--------------------------------।।

त्रिवर्षातीतधान्यानि न प्रशंसन्ति दैविके।

तण्डुलानपि सर्वांश्च मासादूर्ध्वं विसर्जयेत्।।

**ज्ञा.७५.१३९**

### ६.१०.६ हविर्धान्यप्रतिनिधिः

**प्र.१९.३९**

अलाभे चैव सर्वेषां व्रीहीणां तण्डुलांस्तथा।।

**ज्ञा.७५.१३९**

तदलाभे पण्यधान्यानि वा।

### ६.१०.७ हविष्पाकोपयुक्तानां द्रव्याणां ग्राह्याग्राह्यविवेकः

**वा.२९**

कूलस्य जातिभेदैस्तु प्रियङ्गुं चैव वर्जयेत्।

सूरणद्वयकन्दं च लशुनेङ्गुस्तथैव च।।

गृञ्जनादीनि शाकेषु वर्जयित्वा प्रयत्नतः।
आरनालद्वयं चैव कोशातक्यादि वर्जयेत्।।

धरसूरक्तबाष्पं च शाकेषु ग्राह्यमुच्यते।
कन्दस्य शकुटैर्भेदैः सर्वं ग्राह्यमितीरितम्।।

अन्यैरनुक्तजात्यादीन् वर्जयेत् ------।
बिम्बालर्कफलादीनि वर्जयेदिति केचन।।

उत्पलद्वयकन्दं तु कन्दतु कुमुदद्वयम्।
एषां कन्दं तु न ग्राह्यं काश्यपादि प्रचोदितम्।।

भेदैर्बृहति सर्वं च ग्रासतोत्युच्यते बुधैः।
भेदैस्तु कारवल्यादीन् सर्वं ग्राह्यमितीरितम्।।

कन्दपिण्डितकं चैव क्षुद्रकन्दस्तथैव च।
महाकन्दादिकन्दैश्च आहरेत विशेषतः।।

सहकारैश्च भेदैस्तु तथैव पनसद्वयम्।
कदल्यादिषु भेदैस्तु गृहीत्वात्र प्रयत्नतः।।

कूश्माण्डोर्वारुकश्चैव साहस्य स्तथैव च।
------------------------------॥

यथोक्तवैदिकाचारं यज्ञोक्तद्रव्यमाहरेत्।

परिमाणपलाद्यादिपूर्वोक्तेनैव कारयेत्।
ताम्रभाण्डं प्रगृह्यैव मृद्भाण्डं वाथ कारयेत्।।

### ६.१०.८ हविष्पाके धान्यसंस्कारः

स.४५.७ - १५

आपोहिष्ठेति मन्त्रेण प्रोक्ष्य धान्यानि चाहरेत्।।

आलये वा गृहे वापि शुद्धे देशे समाहितः।
विमाने वा कटे वापि समास्तीर्य विधानतः।।

आतपेन तथाशोष्य विश्वामित्रं परिह्वसेत्।
गोचर्ममात्रं सङ्गृह्य मण्डलं चोपलिप्य च।।

चतुर्दिशं चतुर्हस्तं गोचर्मेति प्रशस्यते।

तत्रैवोलूखलं सम्यङ् मुसलं च निधाय च।।

उलूखलेऽर्चयेत् सोमं मुसले च सुदर्शनम्।
पुष्पादीन् शोधयित्वैव धान्यानि प्रक्षिपेत्ततः।।

पादौ प्रक्षाल्य चाचम्य देवेशं चेति संस्मरन्।
पूजिताभिस्तु योषिद्भिः शुद्धाभिश्चावघातयेत्।।

श्वासं स्वेदं विसृज्यैव मूलमन्त्रेण घातयेत्।
तानि प्रक्षिप्य शूर्पेषु निरस्तेति तथैव च।।

शूर्पेण शोधयित्वा तान् कणकङ्कुविवर्जितान्।
वैकुण्ठपुष्पसङ्काशान् तण्डुलान् सम्प्रगृह्य च।।

शुद्धेषु नवपात्रेषु देवस्य त्वेति निक्षिपेत्।

ज्ञा.७५.१३९ ; वि.४३.२९४

### ६.१०.९ धान्यपरिमाणविशेषस्य माषस्य लक्षणम्

**वि.४३.२९४**

अष्टतिलं माषम्

**वि.४३.२९४**

तदष्टकं माषमिति भृगुः।

### ६.१०.१० महापद्मपरिमाणम्

**वा.२४**

चतुर्माषं महापद्मम्

### ६.१०.११ शाणपरिमाणम्

**वि.४३.२९४**

अष्टमाषं शाणम्।

**स.४५.३४**

**वि.४३.२९४**

तिलाष्टकं शाणम् इति भृगुः।

### ६.१०.१२ निष्कपरिमाणम्

**वि.४३.२९४**

विंशतिशाणं निष्कम्

**स.४५.३४**

### ६.१०.१३ पलपरिमाणम्

**वि.४३.२९४**

दशनिष्कं पलम्। अष्टनिष्कमिति केचित्।

**स.४५.३४; वा.२९**

### ६.१०.१४ कुडुबपरिमाणम्

**वि.४३.२९४**

चतुष्पलं कुडुबम्

**स.४५.३५ ; वा.२४**

**वा.२९**

गोकर्णवत् कृतं हस्तं पूरयित्वाथ तण्डुलैः।
प्रमाणं कुडुबं ज्ञेयम् --------------।

### ६.१०.१५ प्रस्थपरिमाणम्

**वा.२९**

चतुष्कुडुबं तु सम्पूर्णं प्रस्थमेकं प्रचक्षते।

**वि.४३.२९४ ; वा.२४**

**स.४५.३५**

प्रस्थं षोडशकं पलम्।

### ६.१०.१६ आढकपरिमाणम्

**वा.२९**

चतुष्प्रस्थस्य सम्पूर्णं आढकं त्विति संज्ञितम्।।

**स.४५.३५; वि.४३.२९४**

### ६.१०.१७ द्रोणपरिमाणम्

**वा.२९**

चतुराढकसम्पूर्णं द्रोणमित्यभिधीयते।

**स.४५.३५; वि.४३.२९४**

### ६.१०.१८ शुक्तिपरिमाणम्

**प्र.१९.४०**

शतद्वयं पञ्चविंशद्व्रीहिभिः पूरितं तु यत्।
शुक्तिमात्रमिति ख्यातं मानं तेनैव कारयेत्।।

### ६.१०.१९ तिलपरिमाणम्

**प्र.१९.४१**

[1]तद्द्वयं तिलमित्युक्तम्।

### ६.१०.२० प्रकुञ्चपरिमाणम्

**प्र.१९.४१**

-------------- प्रकुञ्चं स्यात्तिलद्वयम्।

1. शुक्तिद्वयम्।

**६.१०.२१ प्रसृतिपरिमाणम्**

**प्र.१९.४१**

प्रसृतिः [1]तद्द्वयं प्रोक्तम्।

**६.१०.२२ कुडुबपरिमाणम्**

**प्र.१९.४१**

कुडुबं प्रसृतिद्वयम्।

**६.१०.२३ अञ्जलिपरिमाणम्**

**प्र.१९.४२**

अञ्जलि [2]स्तद्द्वयं प्रोक्तम् -------- ।

**६.१०.२४ प्रस्थपरिमाणम्**

**प्र.१९.४२**

-------------- प्रस्थं स्यादञ्जलिद्वयम्।

**६.१०.२५ पात्रपरिमाणम्**

**प्र.१९.४२**

पात्रं प्रस्थद्वयं प्रोक्तम्।

---

1. प्रकुञ्चद्वयम्। 2. कुडुबद्वयमित्यर्थः।

**६.१०.२६ आढकपरिमाणम्**

**प्र.१९.४२**

--------- आढकं तद्द्वयं भवेत्।

**प्र.१९.५१**

चरुप्रस्थद्वयं प्रोक्तं हविराढकमुच्यते।

**वा.२४**

आढकं तु चतुः प्रस्थम्।

**६.१०.२७ द्रोणपरिमाणम्**

**प्र.१९.४३**

चतुराढकसंयुक्तं द्रोणमित्यभिधीयते।

**६.१०.२८ खारीपरिमाणम्**

**प्र.१९.४३**

द्रोणद्वयं भवेत् खारी।

**६.१०.२९ भारपरिमाणम्**

**प्र.१९.४३**

-------------- भारं खारीद्वयं भवेत्।

**६.१०.३०.० हविषः त्रैविध्यम्**

**स.४५.१५**

उत्तमं मध्यमं चेति कनिष्ठं त्रिविधं हविः।।

**वि.४३.२९४**

**६.१०.३०.१ उत्तमहविषः प्रमाणम्**

**वि.४३.२९४**

विष्णोः द्रोणं हविरुत्तमम्।।

**प्र.१९.४४**

**स.४५.१६**

उत्तमं षोडशप्रस्थम्।

**६.१०.३०.२ मध्यमहविषः प्रमाणम्**

**वि.४३.२९४**

-------------- द्रोणार्धं मध्यमम्।।

**प्र.१९.४४**

**स.४५.१६**

मध्यमं तु [1]तदर्धकम्

**६.१०.३०.३ अधमहविषः प्रमाणम्**

**वि.४३.२९४**

आढकमधमम्।

**स.४५.१६ ; प्र.१९.४४**

1. षोडशप्रस्थनिमितदर्थः।

**६.१०.३१ हविः परिमाणं त्रिविधम्**

**ज्ञा.७५.१३९**

विष्णोः द्रोणं द्रोणार्धमाढकं वा हविरवरमशक्तानां त्रिविधम्।

**६.१०.३२.० शक्तानां हविषो नवविधत्वं द्रोणसंख्याभेदेन**

**ज्ञा.७५.१३९**

द्रोणादिनवद्रोणान्तानि प्रत्येकं द्रोणाधिकान्यधममध्यमोत्तमभेदैः नवधा हवींषि प्रशस्तानि भवन्ति शक्तानामेतानि।

**६.१०.३२.१ उत्तमोत्तमं हविः**

**प्र.१९.४५**

उत्तमोत्तममित्युक्तम् अष्टद्रोणैस्तु तण्डुलैः।

**६.१०.३२.२ उत्तममध्यमं हविः**

**प्र.१९.४६**

षड्द्रोणैस्तण्डुलैः सिद्धं हविरुत्तममध्यमम्।

**६.१०.३२.३ उत्तमाधमं हविः**

**प्र.१९.४७**

द्रोणहीनं भवेत्तस्मात् [1]उत्तमाधममुच्यते।

---

1. षड्द्रोणात्

**६.१०.३२.४ मध्यमोत्तमं हविः**

**प्र.१९.४६, ४७**

[1]तदर्धैस्तण्डुलैः सिद्धं मध्यमं हविरुच्यते।

--------------------------------- ॥

मध्यमोत्तममित्युक्तं चतुर्द्रोणैस्तु तण्डुलैः।

**६.१०.३२.५ मध्यममध्यमं हविः**

**प्र.१९.४८**

द्रोणत्रयं भवेद्यत्र कृतं मध्यममध्यमम्।।

**६.१०.३२.६ मध्यमाधमं हविः**

**प्र.१९.४८**

मध्यमाधममित्युक्तं द्रोणद्वयकृतं हविः।।

**६.१०.३२.७ अधमोत्तमं हविः**

**प्र.१९.४९**

द्रोणेन तण्डुलेनैव निवेद्यमधमोत्तमम्।

**६.१०.३२.८ अधममध्यमं हविः**

**प्र.१९.४९**

तस्य मध्यममित्युक्तम् आढकद्वयसम्मितम्।।

---

1. अष्टद्रोणार्धैः

**६.१०.३२.९ अधमाधमं हविः**

**प्र.१९.५०**

आढकेन तु संयुक्तं अधमाधममुच्यते।

**६.१०.३३.० नित्यं हविः द्विविधम्**

**ज्ञा.७५.१४१**

नित्यं हविर्द्विविधं भवति। भूतं हविरिति।

**६.१०.३३.१ भूतसंज्ञकं नित्यं हविः**

**ज्ञा.७५.१४१**

विधिना यथाभागोपदंशघृतगुडदधिफलयुक्तं भूतम्।

**६.१०.३३.२ हविःसंज्ञकं नित्यं हविः**

**ज्ञा.७५.१४१**

यथाशक्त्युपदंशाद्यैर्युक्तं हविः।

**६.१०.३४ भूतसंज्ञकहविर्विनियोगः**

**ज्ञा.७५.१४१**

[1]द्वात्रिंशतिके भूतमेव हविर्निवेदयेत्।

---

1. उपचारे इति शेषः।

**६.१०.३५ हविः संज्ञकस्य नित्यहविषो विनियोगः**

**ज्ञा.७५.१४१**

[1]सप्तविंशतिके अन्यदिति

**६.१०.३६ नित्यस्य हविषो निवेदनसमयः**

**ज्ञा.७५.१४१**

मुख्यं हविः नित्यं मध्याह्ने कुर्यात्।

**६.१०.३७ हविः प्रमाणम्**

**वा.२४**

आढकन्तु चतुः प्रस्थं द्विगुणं शिवमुच्यते।
द्रोणं तद्द्विगुणं विद्यात्षड्द्रोणं भारमेव च।।

तण्डुलस्यैव षड्द्रोणं तदर्धं वा शिवद्वयम्।
तदर्धन्तु चतुःप्रस्थं एवमत्र हविस्मृतम्।।

**६.१०.३८.० विशेषहविषो द्वैविध्यम्**

**ज्ञा.७५.१४१**

विशेषतश्च हविर्द्विविधं भवति प्रभूतं महाहविरिति।

---

1. अन्यदित्युक्तेर्हविः।

### ६.१०.३८.१ प्रभूतसंज्ञकस्य हविषो लक्षणम्

**वा.२९**

षड्द्रोणस्य प्रमाणेन प्रभूतमिति संज्ञितम्।

**ज्ञा.७५.१४१**

तथैवोपदंशाद्यैर्युक्तं द्विद्रोणादिशतप्रस्थान्तं प्रभूतम्।

**वि.४३.२९५**

द्विद्रोणादि षड्द्रोणान्तं प्रभूतम्।

**स.४५.१७,१८**

तण्डुलानां शतप्रस्थं प्रभूतमिति संस्मृतम्।
द्विगुणं त्रिगुणं वापि चतुर्गुणमथापि वा।।

पञ्चषट्सप्तसंयुक्तमष्टमं नवमं तथा।

**वा.२४**

दशगुणं मन्त्रनाम्ना षड्गुणं वा चतुर्गुणम्।
त्रिगुणं द्विगुणं चैव प्रभूतं पञ्चधा हविः।।

द्विगुणं षड्गुणं वाथ प्रभूतस्य महाहविः।
उपदंश समादाने चाष्टनिष्क फलं समम्।।

उपदंशादि संयोगे चाढकस्यैवमिष्यते।
एक द्वित्रिचतुः पञ्च सङ्ख्या षड्तुका भवेत्।।

मधुरादीनि सोत्कृष्टैः कन्दमूलफलैर्युतैः।

**६.१०.३८.२ महाहविषो लक्षणम्**

**स.४५.१८**

सहस्रप्रस्थसंयुक्तं महाहविरिति स्मृतम्।

**वा.२९.१७३**

**ज्ञा.७५.१४१**

नानाविधैरुपदंशैः घृतगुडदधिफलादिभिः संयुक्तं द्विशतप्रस्थादि प्रत्येकं सहस्रप्रस्थान्तं नवविधं महाहविः।

**वि.४३.२९५**

शतप्रस्थादिसहस्रप्रस्थान्तं महाहविरित्याचक्षते।

**प्र.१९.४५**

अधिकं यद्भवेत् [1]तस्मात् प्रोक्तं सर्वं महाहविः।।

**६.१०.३९ प्रभूतसंज्ञकहविषो विनियोगः**

**ज्ञा.७५.१४१**

विशेषपूजायां प्रभूतं-------------- कुर्यात्।

**६.१०.४० महाहविषो विनियोगः**

**ज्ञा. ७५.१४१**

काम्यके महाहविः कुर्यात्।

---

1. अष्टद्रोणात्

### ६.१०.४१.० हविषः षड्विधत्वम्

**स.४५.२०**

मौद्गिकं पायसं चैव कृसरं गौल्यमेव च।

यावकं चैव शुद्धान्नमित्युक्तं षड्विधं हविः।।

**ज्ञा.७५.१४० ; वा.२९ ; वि.४३.२९६**

### ६.१०.४१.१ मौद्गिकहविषो लक्षणम्

**स.४५.२१, २२**

तण्डुलस्य समं ग्राह्यं मुद्गसारमिति स्मृतम्।

पादं पादार्धसंयुक्तमर्ध वै मुद्गसारकम्।।

तण्डुलेन समायुक्तं पाचयेत्ततु मौद्गिकम्।

**ज्ञा.७५.१४०**

**वि.४३.२९६**

तण्डुलतुल्यैः अर्धैर्वा मुद्गसारैर्युक्तं मौद्गिकम्।

**वा.२९**

प्रस्थस्य मुद्गखण्डेन सप्तप्रस्थजलैर्युतम्।।

तण्डुलस्याढकैर्युक्तं पाचयेन्मौद्गिकं भवेत्।

### ६.१०.४१.२ पायसान्नहविषो लक्षणम्

**स.४५.२२ - २४**

यावत्तण्डुलमादाय त्रिगुणं दुग्धमाहरेत्।।

एवं पचेत मृद्भाण्डे पायसान्नं विचक्षणः।

तण्डुलस्य चतुर्भागमर्धं पादं तु वा घृतम्।।

तत्समं गुडमाक्षिप्य पायसान्नं विधीयते।

**वि.४३.२९६**

**ज्ञा.७५.१४०**

तण्डुलस्यार्धेन मुद्गसारेण त्रिगुणेन पयसा पायसस्य गुडं घृतं च पादम्।

**वा.२९**

व्याढकं क्षीरसंयुक्तम् आढकार्धं जलैर्युतम्।।

गुलं पलं च निक्षिप्य तण्डुलैराढकैर्युतम्।

यथारुचि तथा कुर्यात् लवणं तत्र योजयेत्।।

एवमेव क्रमेणैव कृत्वा तत्पायसं भवेत्।

रम्भाफलैश्च पनसैः नारिकेलफलैर्युतम्।।

सघृतैर्युक्तपाकेन पायसं त्विति केचन।

### ६.१०.४१.३ कृसरसंज्ञकस्य हविषो लक्षणम्

**स.४५.२४ - २६**

यावत्तण्डुलपक्वं स्यात्तदर्धं तिलमाहरेत्।।

सार्धपादं तथा पादं तिलचूर्णं च कारयेत्।

तच्चूर्णेन समायुक्तं पूर्वोक्तेन घृतेन च।।

तथा गुडेन संयुक्तं कृसरं हविरुच्यते।

**ज्ञा.७५.१४० ; वि.४३.२९६**

**वा.२९**

षट् प्रस्थार्धजलैर्युक्तं प्रस्थार्धैस्तिलचूर्णितम्।।

तण्डुलैराढकैर्युक्तं पाचयेत् कृसरं भवेत्।

### ६.१०.४१.४ गौल्यसंज्ञकस्य हविषो लक्षणम्

**स.४५.२६ - २८**

तण्डुलात् त्रिगुणं दुग्धं दुग्धार्धं तोयमाहरेत्।।

तदर्धं मुद्गमित्युक्तं मुद्गसारमिति स्मृतम्।

तथा गुडं घृतं चैव तण्डुलार्धं विधीयते।।

पक्वमेतैः समायुक्तं गौल्यं हविरिति स्मृतम्।

**ज्ञा.७५.१४०**

यावत्तण्डुलस्य त्रिगुणदुग्धेन दुग्धार्धतोयेन तण्डुलं अष्टभागं कृत्वा तत्पञ्चभागेन मुद्गसारेण च युक्तं तण्डुलसमेन गुडेन तदर्धघृतेन मिश्रं गौल्यम्।

**वि.४३.२९६**

### ६.१०.४१.५ यावकसंज्ञकस्य हविषो लक्षणम्

**स.४५.२८, २९**

यावत्तण्डुलमादाय तदर्धं यवमाहरेत्।।

सार्धपादं तु वा पादं यवं च प्रतिगृह्य च।
यावकं पाचयेत्तस्य पायसान्नं गुडं घृतम्।।
**ज्ञा.७५.१४० ; वि.४३.२९६**

**६.१०.४१.६ शुद्धान्नसंज्ञकस्य हविषो लक्षणम्**

**स.४५.३०**

श्वेतैश्च तण्डुलैः शुद्धैः शुद्धान्नं पाचयेद्बुधः।
**ज्ञा.७५.१४० ; वि.४३.२९६**

**६.१०.४२ षड्विधहविष्षु उत्तरोत्तरज्यायस्त्वम्**

**वि.४३.२९७**

शुद्धान्नान्मौद्गिकं मुख्यं, तस्मात्कृसरं, ततः पायसम्, ततो यावकम्, तस्माद् गौल्यम्।

**६.१०.४३ मौद्गिकादीनामलाभे प्रतिनिधिः**

**ज्ञा.७५.१४०**

सर्वालाभे शुद्धौदनमेव।

**स.४५.३०**

मूर्तीनां चैव सर्वासां शुद्धान्नं चाथ पाचयेत्।

**६.१०.४४ षड्विधानां हविषां निवेदनस्यावश्यकता**

**स.४५.३१**

हवींषि विष्णवे दद्याच्छक्तः सर्वाणि नित्यशः।

**६.१०.४५ अपूपपाकः**

**वा.२४**

प्रस्थार्धं मुद्गसारं च तदर्धं घृतमाहरेत्।
गुडं पलं तदर्धं वा दधिप्रस्थार्धमेव च।।

मरीचिर्जीरकाख्यां च सर्षपेण च संयुतम्।
आढकस्यैवमुद्दिष्टं फलत्रयसमाहितम्।।

द्रोणं द्रोणद्वये वापि भारेऽप्येवस्तु वर्धयेत्।(?)
क्षीरन्तु हविरष्टांशं गव्यं गुडसुमिश्रितम्।।

अपूपमेवमुद्दिष्टं एकप्रस्थद्वयस्य वै।
नवमृत्कुंभं संतप्तं उत्पूतं च समाहरेत्।।

**६.१०.४६ देव्योः हविःपरिमाणम्**

**ज्ञा.७५,१३९**

देव्योर्देवेशस्य हविषोऽऽर्धमाढकम् द्विप्रस्थं वा।

**प्र.१९. ५०**

**वि. ४३ , २९४**

देव्योराढकं तदर्धं वा।

**६.१०.४७ देव्यादीनां हविःपरिमाणम्**

**वा.२९**

देव्योश्च परिवारादि नित्यहोमचरुं तथा।
प्रस्थद्रव्यं प्रकुर्वीत न्यूनेनैवात्र पाचयेत्।।

### ६.१०.४८ परिवारदेवानां हविःपरिमाणम्

**ज्ञा.७५.१३९**

परिवारदेवानामाढकं द्विप्रस्थं विधीयते।

**वि.४३.२९४**

[प्रस्थाधिकैर्वा तण्डुलैः इति विशेषः।]

### ६.१०.४९ हविष्पाके स्थालीपात्रस्य उपादानद्रव्यम्

**वि.४३.२९४**

लोहमयीं मृण्मयीं वा स्थालीं गृह्णीयात्।

### ६.१०.५० श्रेष्ठं पचनपात्रम्

**स.४५.३२**

मृण्मये तु नवे पात्रे पचनं श्रेष्ठमुच्यते।

**ज्ञा.७५.१४०**

### ६.१०.५१ मृण्मयपात्रस्य प्रतिनिधिः

**स.४५.३२**

अलाभे लोहपात्रे वा पाचयेत्तद्विधानतः।

**ज्ञा.७५.१४०**

### ६.१०.५२ मृण्मयपात्रे पाककालावधिः

**वि.४३.२९४ - २९६**

मृण्मयीं पक्षेऽतीते विवर्जयेत्। मासेऽतीते इति केचित्। मासातीते मृद्भाण्डे पचनं न कुर्यात्।

**स.४५,३२ ; ज्ञा.७५.१४०**

### ६.१०.५३ एकपात्रे पक्तव्यपरिमाणम्

**स. ४५. ३३**

द्रोणादर्धाधिकं यत्तदेकपात्रे न पाचयेत्।
अथवा पाचयेद् भाण्डे चतुः प्रस्थं विधानतः।।

**ज्ञा.७५.१४० ; वा.२९ ; वि.४३.२९६**

### ६.१०.५४ हविषः पचनप्रकारः

**स. ४५ . ३८ - ४५**

वस्त्वा स्नात्वा शुचिर्भूत्वा पचनारम्भमाचरेत्।।

दुहतां दिवमित्युक्त्वा तोयमाहृत्य वै बुधः।
प्रजास्थालीति मन्त्रेण स्थालीमाहृत्य यत्नतः।।

विष्णवे जुष्टमित्युक्त्वा स्थाल्यां तण्डुलमाक्षिपेत्।
इदमापः शिवश्चेति शोधयित्वा जलेन वै।।

वाचस्पतेति मन्त्रेण चुल्यामारोपयेद्धविः।
शुद्धं सुगन्धं पुण्यं तदिन्धनं सम्प्रगृह्य च।।

इन्धनैः पाचयेदेवं हविष्यं तच्छुभं स्मृतम्।
देवेभ्यः स्वन्नमिच्छन्ति स्रावि सर्वत्र वर्जयेत्।।

दुर्गन्धकाष्ठान्यन्यानि विषधूमानि वर्जयेत्।
कण्टकैश्च समायुक्तं सर्वं यत्नेन वर्जयेत्।।

पाचकः प्राङ्मुखो भूत्वा हविः सम्यक् सुपाचयेत्।
अथवोदङ्मुखो भूत्वा पाचयेत विधानतः।।

उपक्रम्येष्टमात्रं च हविराक्षिप्य न व्रजेत्।

**ज्ञा.७५.१४० ; प्र.१९.५२ - ५४ ; वि.४३.२९४, २९५**

**६.१०.५५ उपदंशादिपरिमाणम्**

**स.४५.५४ - ६०**

आढकस्योपदंशानां संयोगः सम्प्रवक्ष्यते।
प्रत्येकमुपदंशं च षट् पलं वा चतुष्पलम्।।

प्रस्थस्यार्धं तु पादं वा सूपसारं समाहरेत्।
घृतं च कुडुपं वाथ तदर्धं पादमेव वा।।

प्रस्थमर्धं तदर्धं वा दधि सम्यक् समाहरेत्।
गुडं पलं तदर्धं वा यथालाभमथापि वा।।

द्रोणार्धे च तथा द्रोणे वर्धयेदधिकेऽपि च।
कदल्याः पनसस्यापि चूतस्यापि स्वशक्तितः।।

फलानि च सुपक्वानि यथालाभानि चाहरेत्।
सूपं च गरुसाश्चापि यथाशक्ति सुकारयेत्।।

युक्तं तण्डुलपिष्टेन समेनैव गुडेन च।
पादोनेनाथवार्धेन पचेत् गुडसमायुतम्।।

मरीचजीरकैर्युक्तं घृतेऽपूपानि पाचयेत्।

हवींषि सोपदंशानि पाचयेत स्वशक्तितः।।

**ज्ञा.७५.१३९.१४०**

आढकतण्डुलस्य प्रत्येकमुपदंशाश्चतुष्पलाः। प्रस्थार्धं मुद्गसारं कुडबं घृतमेकपलं गुडं प्रस्थं दधि तदर्धं वा कदलीचूतपनसाद्यानां फलानि यथालाभानि

**वि.४३.२९५**

आढकतण्डुलस्योपदंशं प्रत्येकं षट्पलं, पञ्चपलं, चतुष्पलं वा मुद्गसारं प्रस्थं प्रस्थार्धं कुडुबं वा घृतं कुडुबं तदर्धं, गुलमेकपलं, दधि प्रस्थं पादहीनं, अर्धं वा

### ६.१०.५६ उपदंशाहरणप्रकारः

**वि.४३.२९५**

उपदंशान् कदलीचूतपनसनालिकेरतिन्त्रिणीकारवल्लीत्रयव्याघ्रशिंवि-भेदबृहतीभेदसिंही व्याघ्रनखी कर्कन्धूर्वारककुम्भाण्डकूष्माण्डकृत-बन्धनाऽलर्ककार्कोटकानि सूरणकन्द-क्षुद्रकन्द-महाकन्द-वल्लीकन्द-शृङ्गीबेरोत्पलकन्द-पिण्डि-शकुट-कन्दादीनि च मरीचि-जीरक-सर्षपाणि मुद्गाढक-कुलत्थ-तिल्व-माष-मसूरकादीनि शाकेषु जीवन्तीरथर-सीरक्तबाष्पाणि च अन्यानि हविष्याणीति मन्वाद्यैरुक्तानि यथालाभमाहरेत्। कदल्यादिष्वेकं द्वौ त्रींश्चतुरोऽधिकान् वा दोषविहीनान् प्रक्षाल्य यथायोगं सुगन्धं रससंयुक्तं सुपचेत्

**स.४५.४५ - ५१ ; स.४५.१९ ;**

**ज्ञा.७५.१३९ ; प्र.१९.५६, ५७**

**६.१०.५७ वर्ज्योपदंशाः**

**वि.४३.२९५**

कोशातकीं पटोलीम् अलाबूं च विशेषेण परिवर्जयेत्।

**६.१०.५८ वर्जनीयौ हविरुपदंशौ**

**वि.४३.२९६**

अपक्वं, स्रावितं, गन्धदुष्टं, नासिकाऽऽस्यवायूपहतम्, आघ्रातं, तुषकेशादिसंयुक्तं, विवृतं, द्विजादिभ्योऽन्यजातिदुष्टं, स्वेदस्पृष्टं, लङ्घितं यामातीतं, पात्रान्तरगतं, शीतं, हविरुपदंशं च वर्जनीयम्। अन्यपात्रगतं पुनः पाकार्हमुपदंशादि न वर्जनीयम्।

**ज्ञा.७५.१४०**

**प्र.१९.५५**

धर्मगन्धरसं स्विन्नमतिपक्वं च शीतलम्।
केशकीटापविद्धं तु त्यजेत् पर्युषितं तथा।।

**६.१०.५९ वर्जनीयशाकानि**

**वा.२४**

कोशातकीं अलाबुं च सूरणं च विवर्जयेत्।
चतुष्फलं षट्फलं वा प्रत्येकमुपदंशकम्।।

**६.१०.६० तण्डुलानुरोधेन क्रमुकादीनां प्रमाणम्**

**वि.४३.२९५**

आढकतण्डुलस्य ------------। क्रमुकफलानि षोडश, द्वादशाष्ट, षट्, चत्वारि, द्वे वा, तत्र त्रिगुणानि द्विगुणानि वा ताम्बूलपत्राणि,

मातुलङ्गैलालवङ्गकर्पूरादि यथालाभं भवेत्, आढकतण्डुलाद्याधिक्येप्येवं वर्धयेत्।

**ज्ञा.७५.१४०**

**६.१०.६१ उपदंशपाकप्रकारः**

**स.४५.५२, ५३**

आहृत्य क्षालयित्वा तु पृथक् पात्रे यथाविधि।
मरीचजीरकैर्युक्तं सुगन्धि सरसं शुभम्।।

एकं द्वौ त्रींस्तथा सम्यक् चतुरो वा ततोऽधिकान्।
उपदंशान् यथायोगं पाचयेत स्वशक्तितः।।

**ज्ञा.७५.१४० ; वा.२९**

**वि.४३.२९५**

कदल्यादिष्वेकं द्वौ त्रींश्चतुरोऽधिकान् वा दोषविहीनानां प्रक्षाल्य यथायोगं सुगन्धं रससंयुक्तं सुपचेत्।

**६.१०.६२ पानीयम्**

**वा.२४**

जलं सूर्यांशुसन्तप्तं सहबिन्दुकवैद्युतम्।
एलाचन्दनकर्पूरैरुशीरैश्च सुवासितम्।।

पाटलीकेतकीभ्यां च चम्पकैरुत्पलैरपि।
एतत्प्रसारितं तोयं पानीयं परिकल्पितम्।।

## ११. मूर्तिमन्त्राः*

### ६.११.१ चतुर्मूर्त्यर्चनोद्देशः

**स.४१.१२५ - १२९**

चातुर्वर्ण्यसमृद्ध्यर्थं चतुर्मूर्तिभिरेव वै।
सर्वान् देवांश्च सर्वत्र विधिना सम्यगर्चयेत्।।

### ६.११.२ विष्णुमूर्तिमन्त्रः

**वि.२०.१०३**

विष्णुं महाविष्णुं सदाविष्णुं व्यापिनम्[1]

**ज्ञा. ७४. १३५ ; खि. २१. २ ; नि. २५**

**वि.२०.१२९**

विष्णुं पुरुषं व्यापिनं रत्नं विश्वम्।

### ६.११.३ पुरुषमूर्तिमन्त्रः

**वि.२०.१०३**

पुरुषं पुरुषात्मकं परमपुरुषं धर्ममयम्।

**खि. २१. ९ , १०**

---

*.आवाहने अर्चने हौत्रशंसनादौ उपयुज्यमानाः चतुर्मूर्त्यादिमन्त्राः

1.अत्र मूर्तिमन्त्रेषु सर्वत्र द्वितीयान्तपदानामध्याहृतेन आवहयामि इत्यादि पदेनान्वयो द्रष्टव्यः।

**६.११.४ कपिलमूर्तिमन्त्रः**

**वि.२०.१०४**

कपिलं मुनिवरं शुद्धं वेदरूपिणम्।

**नि.२५**

कपिलं रविमव्यक्तं विष्णुं पातालवासिनम्।।

**६.११.५ सत्यमूर्तिमन्त्रः**

**वि.२०.१०४**

सत्यं सत्यात्मकं ज्ञानमयं संहारम्।

**खि.२१.१६**

**६.११.६ यज्ञमूर्तिमन्त्रः**

**वि.२०.१०४**

यज्ञं सर्वदेवमयं पुण्यं क्रतुम्।

**खि.२१.४६**

यज्ञं सुतपसं नित्यं भावितात्मानमित्युत।
अर्चयेद्दक्षिणे भागे ----------------।।

**६.११.७ अच्युतमूर्तिमन्त्रः**

**वि.२०.१०४**

अच्युतम् अपरिमितमैश्वर्यं श्रीपतिम्।

**खि.२१.२२**

## ६.११.८ नारायणमूर्तिमन्त्रः

**वि.२०.१०४**

नारायणं जगन्नाथं देवदेवं त्रयीमयम्।

**खि.२१.३५**

नारायणं पुराणेशं मन्त्रमूर्तिमिति क्रमात्।
विश्वरूपिणमित्युक्त्वा अर्चयेत्तु विधानतः।।

**वि.४४.२९९**

नारायणं कृष्णं शौरीं भक्तवत्सलम्

## ६.११.९ अनिरुद्धमूर्तिमन्त्रः

**वि.२०.१०५**

अनिरुद्धं महान्तं वैराग्यं सर्वदेव (तेजो)मयम्।

**खि.२१. २५**

## ६.११.१० पुण्यमूर्तिमन्त्रः

**वि.२०.१०५**

पुण्यं पुण्यात्मकं पुण्यमूर्तिं पुण्यदायिनम्।

**खि.२१.१९, २०**

पुण्यं च विश्वं शुद्धं च वरिष्ठम् इति च क्रमात्।।

अर्चयेत्पुण्यमपि च -------------------।

**६.११.११ वराहमूर्तिमन्त्रः**

**वि.२०.१०५**

वराहं वरदं भूमिसन्धारणं वज्रदंष्ट्रम्।

**खि. २१. ३७, ३८; नि. २५**

**६.११.१२ सुभद्रमूर्तिमन्त्रः**

**वि.२०.१०५**

सुभद्रं सुमुखं सुखप्रदं सुखदर्शनम्।

**६.११.१३ नारसिंहमूर्तिमन्त्रः**

**वि.२०.१०८**

नारसिंहं तपोनाथं महाविष्णुं महाबलम्।

**खि.२१.४४ ; नि.२५**

**खि.२१.३६, ३७**

तथैवोत्तरभागे तु पूजयेन्नारसिंहकम्।।

नारसिंहं तपोनाथं महाविष्णुं महाबलम्।

**६.११.१४ ईशितात्ममूर्तिमन्त्रः**

**वि.२०.१०६**

ईशं वरदं सर्वेश्वरं ईशितात्मानम्।

६.११.१५ वामनमूर्तिमन्त्रः

वि.२०.१०६

वामनं वरदं काश्यपम् अदितिप्रियम्।

६.११.१६ सर्वोद्वहमूर्तिमन्त्रः

वि.२०.१०६

सर्वेशं सर्वाधारं सर्वज्ञं सर्वोद्वहम्।

६.११.१७ त्रिविक्रममूर्तिमन्त्रः

वि.२०.१०६

त्रिविक्रमं त्रिलोकेशं सर्वाधारं वैकुण्ठम्।

६.११.१८ सर्वविद्येश्वरमूर्तिमन्त्रः

वि.२०.१०६

सर्वविद्येश्वरं पुण्यं शुद्धं ज्ञानम्।

६.११.१९ इन्द्रमूर्तिमन्त्रः

वि.२०.१०७

इन्द्रं शचीपतिं पुरुहूतं पुरन्दरम्।

स.३६. २६ ; ज्ञा. ७४. १३६; नि.२५

६.११.२० अग्निमूर्तिमन्त्रः

वि.२०.१०७

अग्निं जातवेदसं पावकं हुताशनम्।

स.३६. २६, २७; ज्ञा.७४. १३६; नि.२५

**६.११.२१ यममूर्तिमन्त्रः**

**वि.२०.१०७**

यमं धर्मराजं प्रेतेशं मध्यस्थम्।

**स.३६.२७ ; ज्ञा.७४.१३६; नि.२५**

**६.११.२२ निऋतिमूर्तिमन्त्रः**

**वि.२०.१०७**

आरम्भाधिपतिं नीलं निऋतिं सर्वरक्षोऽधिपतिम्।

**स.३६.२८ ; ज्ञा.७४.१३६ ; नि.२५**

**६.११.२३ वरुणमूर्तिमन्त्रः**

**वि.२०.१०७**

वरुणं प्रचेतसं रक्ताम्बरधरं यादसांपतिम्।

**स.३६.२९ ; ज्ञा.७४.१३६; नि.२५**

**६.११.२४ वायुमूर्तिमन्त्रः**

**वि.२०.१०७**

जवनं भूतात्मकं वायुमुदानम्।

**स.३६.२९, ३० ; ज्ञा.७४.१३६; नि.२५**

**६.११.२५ कुबेरमूर्तिमन्त्रः**

**वि.२०.१०८**

कुबेरं धन्यं पौलस्त्यं यक्षराजम्।

**स.३६.३०,३१ ; ज्ञा.७४.१३६; नि.२५**

**६.११.२६ ईशानमूर्तिमन्त्रः**

**वि.२०.१०८**

ईशानम् ईश्वरं देवं भवम्।

**स.३६.३१ ; ज्ञा.७४.१३६**

**नि.२५**

[अत्र देवमित्यस्य स्थाने महादेवमिति विशेषः]

**६.११.२७ रुद्रमूर्तिमन्त्रः**

**खि.२१.४५**

रुद्रं त्रियम्बकं चेति गौरीशं शर्वमित्युत।।.

**६.११.२८ श्रीमूर्तिमन्त्रः**

**वि.२०.१०८**

श्रियं धृतिं पवित्रीं प्रमोदायनाम् (प्रमोदाधायिनीम्)

**स.३६.१२ ; ज्ञा.७४.१३५; खि.२१. ३**

**नि.२५**

[अत्र धृतिं इत्यस्य स्थाने द्युतिमिति विशेषः]

**खि.२१.११**

श्रियं च कमलां चेति पुरुषस्य प्रियां तथा।

आनन्दाम् ---------------------।।

**वि.४४.२९८**

**६.११.२९ भूमिमूर्तिमन्त्रः**

**वि.२०.१०८**

हरिणीं पौष्णीं क्षोणीं महीम्।

**स.३६.१२ ; ज्ञा.७४.१३६; खि.२१.४; नि.२५**

**खि.२१.१२**

मेदिनीं धरणीमुर्वीं सर्वाधारां महीं क्षितेः।

**वि.४४.२९८**

**खि.२१.१७**

पौष्णीं च वरदामुर्वीं पृथिवीम् ------।।

**खि.२१.२३**

क्षोणीं वराङ्गीं वरदामर्चयेत्पुण्यदायिनीम्।

**खि.२१.२६**

महीं गां पृथुलां चेति अर्चयेत्तु ध्रुवाम् इति।

**६.११.३० सर्वमूर्तिमन्त्रः**

**वि.२०.१०९**

सर्वं विश्वं सर्वाधारं सर्वेश्वरम्।

**६.११.३१ हयात्मकमूर्तिमन्त्रः**

**वि.२०.१०९**

हयात्मकं देवेशं सर्वानन्दं सनातनम्।

**६.११.३२ सुखावहमूर्तिमन्त्रः**

**वि.२०.१०९**

सुखावहं सुकेशं सुमुखं सुरप्रियम्।

**६.११.३३ परशुराममूर्तिमन्त्रः**

**वि.२०.१०९**

रामदेवं महाबलं महाभद्रं परशुपाणिम्।

**वि.२१.१४३**

राममृषिसुतं विष्णुं परशुपाणिम्।

**६.११.३४ संवहमूर्तिमन्त्रः**

**वि.२०.१०९**

संवहं सुकृतं विज्ञानं वेदमयम्।

**६.११.३५ सुवहमूर्तिमन्त्रः**

**वि.२०.१०९**

सुवहं सर्वतेजोमयम् आनन्दं सर्वरूपिणम्।

**६.११.३६ मित्रमूर्तिमन्त्रः**

**वि.२०.११०**

मित्रं लोकहितं विश्वात्मानं कपि (वि) वरम्।

**वि.२०.११३**

मित्रं त्वरं राजिष्वन्तं रमणकमिति।

**स.३६.६१ ; ज्ञा.७४.१३७**

**६.११.३७ अत्रिमूर्तिमन्त्रः**

**वि.२०. ११०**

अत्रिं त्रिधागतिं तृतीयात्मकं वेदमूर्तिम्।

**स.३६.५४**

अत्रिं नियामकं चेति सत्यनेत्रं गुरुं तथा।

अनसूयापतिं चात्रिम् ------------।।

**ज्ञा.७४.१३७**

**६.११.३८ शिवमूर्तिमन्त्रः**

**वि.२०.११०**

शिवं मुनिवरं शुद्धं सुयोक्तारम्।

**६.११.३९ विश्वमूर्तिमन्त्रः**

**वि.२०.११०**

विश्वं भूतनायकं जगद्वीक्षणं सर्वमातृकम्।

**६.११.४० सनातनमूर्तिमन्त्रः**

**वि.२०.११०**

सनातनं मुनीन्द्रं ब्रह्मसम्भवं निष्ठानकम्।

**६.११.४१ सनन्दनमूर्तिमन्त्रः**

**वि.२०.११०**

सनन्दनं गुरुं सर्वपूज्यं मन्त्रज्ञम्।

**६.११.४२ सनत्कुमारमूर्तिमन्त्रः**

**वि.२०.११०**

सनत्कुमारं ज्योतिरीशं निरुद्वेगम् अक्रोधम्।

**६.११.४३ सनकमूर्तिमन्त्रः**

**वि.२०.११०**

सनकं नियन्तारं धर्मज्ञं धर्मचोदितम्।

**६.११.४४ ब्रह्ममूर्तिमन्त्रः**

**वि.२०.१११**

ब्रह्माणं प्रजापतिं पितामहं हिरण्यगर्भम्।

**खि.२१.४५**

विरिञ्चिं वरदं चेति ब्रह्माणं पद्मसम्भवम्।

**स.३६.१३ ; ज्ञा.७४.१३६; नि.२५**

**वि.२०.१३७**

प्रजापतिं स्रष्टारं वेदमयं ब्रह्मरूपिणम्।

**वि.४४.२९९**

प्रजापतिं पितामहं हेमवर्णम् अजाननम्

**६.११.४५ मार्कण्डेयमूर्तिमन्त्रः**

**वि.२०.१११**

मार्कण्डेयं पुण्यं पुरातनम् अमितम्।

**खि.२१.६, १३, १४, १७**

चिरायुषं मार्कण्डेयं रौहिणेयमुदग्रिणम्।

पुराणं भक्तिमन्तं च भार्गवं चिरजीविनम्।।

मार्कण्डेयमुरुं दीप्तपुण्यं पावनम् इत्यपि।।

**स.३६.१४,१५ ; ज्ञा.७४.१३६**

**नि.२५**

मार्कण्डेयं पुराणं च चिरायुष्यं तथैव च।

सत्यधर्मप्रतिष्ठानं मार्कण्डेयस्य वै बुधः।।

**६.११.४६ गङ्गाधरमूर्तिमन्त्रः**

**वि.२०.१११**

गङ्गाधरं वृषवाहनम् अष्टमूर्तिम् उमापतिम्।

**ज्ञा.७४.१३६**

**६.११.४७ भृगुमूर्तिमन्त्रः**

**वि.२०.१११**

पद्मापितरं धातृनाथं ख्यातीशं भृगुम्।

**स.३६.१५ ; ज्ञा.७४.१३६; खि.२१.५; नि.२५**

**खि.२१.१२**

भृगुं मुनिवरं शुद्धमग्निवर्णं तपोधनम्

**खि.२१.१८, १९**

धातृनाथं भूतनाथं ब्रह्मसंभवमेव च।।

वाग्देवीपतिम् ---------------।

**वि.४४.२९८**

[अत्र भूतनाथम् इत्यस्य स्थाने पूतकायम् इति दृश्यते।]

**खि.२१.२३**

ख्यातीशं च तपोयोनिममृतं चाप्ययोनिजम्।।

**खि.२१.२७**

भृगुं तपोनिधिं चेति वेदरूपं महाप्रभम्।

**६.११.४८ धातृमूर्तिमन्त्रः**

**वि.२०.११२**

धातारं डम्भिनं सनिलं गन्धर्वम्।

**स.३६.१६**

[अत्र गन्धर्वम् इत्यस्य स्थाने गह्वरम् इति निर्दिश्यते इति विशेषः।]

**ज्ञा.७४.१३६; नि.२५**

**६.११.४९ विधातृमूर्तिमन्त्रः**

**वि.२०.११२**

विधातारं कीनाशं मुरुण्डं न्यर्णम्।

**स.३६.१६,१७ ; ज्ञा.७४.१३६; नि.२५**

**६.११.५० भृतिमूर्तिमन्त्रः**

**वि.२०.११२**

भृतिं भुवङ्गम् उत्सङ्गं पीठम्।

**स.३६.१७ ; ज्ञा.७४.१३६; नि.२५**

**६.११.५१ पतङ्गमूर्तिमन्त्रः**

**वि.२०.११२**

पतङ्गम् उत्करम् अपदानं कपर्दिनम्।

**स.३६.१८ ; ज्ञा.७४.१३६; नि.२५**

**६.११.५२ पतिरमूर्तिमन्त्रः**

**वि.२०.११२**

पतिरं बल्वितं मध्यगं वङ्करम्।

**स.३६.१८, १९ ; ज्ञा.७४.१३६; नि.२५**

**६.११.५३ वरुणमूर्तिमन्त्रः**

**वि.२०.११२**

वरुणं तेजिनं दंशिनं तरस्विनमिति।

**स.३६.१९, २० ; ज्ञा.७४.१३६; नि.२५**

६.११.५४ न्यक्षमूर्तिमन्त्रः

वि.२०.११२

न्यक्षं दधीत्यकं पीवरमार्यकमिति।

स.३६.५९ ; ज्ञा.७४.१३७

६.११.५५ विवस्वन्मूर्तिमन्त्रः

वि.२०.११३

विवस्वन्तं भरतं विश्वकर्माणं मरीचिमन्तमिति।

स.३६.६० ; ज्ञा.७४.१३७

६.११.५६ क्षत्तृमूर्तिमन्त्रः

वि.२०.११३

क्षत्तारं महीधरम् उर्वरोहं शेवधिमिति।

स.३६.६१,६२ ; ज्ञा.७४.१३७

६.११.५७ मणिकमूर्तिमन्त्रः

वि.२०.११३

मणिकं महाबलं विमलं द्वारपालकम्।

स.३६.२० ; ज्ञा.७४.१३६

नि.२५

[अत्र महाबलमिति स्थाने योगनिष्ठमिति प्रयुक्तम्]

**६.११.५८ सन्ध्यामूर्तिमन्त्रः**

**वि.२०.११३**

सन्ध्यां प्रभावतीं ज्योतिरूपां दृढव्रताम्।।

**स.३६.२१ ; ज्ञा.७४.१३६; नि.२५**

**६.११.५९ वैखानसमूर्तिमन्त्रः**

**वि.२०.११४**

विखनसं तपोयुक्तं सिद्धिदं सर्वदर्शनमिति

**स.३६.२२,२३ ; ज्ञा.७४.१३६; नि.२५**

**६.११.६० तापसमूर्तिमन्त्रः**

**वि.२०.११४**

तापसं सिद्धिराजं सर्वदोषविवर्जितं सहस्राश्वमेधिनमिति।

**स.३६.२१,२२ ; ज्ञा.७४.१३६; नि.२५**

**६.११.६१ किष्किन्धमूर्तिमन्त्रः**

**वि.२०.११४**

किष्किन्धं बहुमर्दिनं बहुसेनं दृढव्रतमिति।

**ज्ञा.७४.१३६**

[अत्र उदावहमिति स्थाने तपोयुक्तमिति प्रयुक्तम्।]

**स.३६.२३,२४**

### ६.११.६२ तीर्थमूर्तिमन्त्रः

**वि.२०.११४**

तीर्थमुद्वाहकं सर्वयोग्यम् उदावहमिति।

**स.३६.२४,२५ ; ज्ञा.७४.१३६**

### ६.११.६३ वक्रतुण्डमूर्तिमन्त्रः

**वि.२०.११४**

वक्रतुण्डम् एकदंष्ट्रं विकटं विनायकमिति।

**स.३६.७१,७२ ; ज्ञा.७४.१३८; नि.२५**

### ६.११.६४ नागराजमूर्तिमन्त्रः

**वि.२०.११५**

नागराजं सहस्रशीर्षम् अनन्तं शेषमिति।

**स.३६.७२ ; ज्ञा.७४.१३८**

### ६.११.६५ शङ्खनिधिमूर्तिमन्त्रः

**वि.२०.११५**

शङ्खनिधिं वरं धनदं मौक्तिकोद्भवमिति।

**खि.२१.१४, १५**

शङ्खं मुनिवरञ्चेति धनदस्य सखं तथा।।

मौक्तिकोद्भवमिति--------------।

### ६.११.६६ पद्मनिधिमूर्तिमन्त्रः

**वि.२०.११५**

पद्मनिधिं वरं रक्ताभं भूतनायकमिति।

**खि.२१.१५**

पद्मं निधिवरं चेति रक्ताङ्गं भूतनायकम् ।।

### ६.११.६७ तुहिणमूर्तिमन्त्रः

**वि.२०.११५**

तुहिणं दैत्यराजं विष्णुभक्तं गदाधरमिति।।

**खि.२१.७, ८**

### ६.११.६८ बलिन्दमूर्तिमन्त्रः

**वि.२०.११५**

दैतेयं महावीर्यं बलिन्दं शूलपाणिमिति

**खि.२१.८,९**

### ६.११.६९ नन्दकमूर्तिमन्त्रः

**वि.२०.११६**

नन्दकं खड्गं पापहरं दैत्यनाशनमिति।

### ६.११.७० शार्ङ्गमूर्तिमन्त्रः

**वि.२०.११६**

शार्ङ्गं धनुर्वरं शत्रुहन्तारं वरायुधमिति

ज्ञा.७४.१३८

[अत्र शत्रुहन्तारमित्यस्य स्थाने कार्मुकमिति प्रयुक्तम्।]

६.११.७१ शङ्खचूलिमूर्तिमन्त्रः

वि.२०.११६

शङ्खचूलिनं वृक्षदण्डं श्वेताभं घोररूपिपिणम्।

खि.२१.२०

शङ्खचूडं वृक्षषण्डं श्वेताभं घोररूपिणम्।।

नि. २५

६.११.७२ चक्रचूलिमूर्तिमन्त्रः

वि.२०.११६

चक्रचूलिनं महानादम् उग्रतापं भयानकम्।

खि.२१.२१

नि. २५

[अत्र उग्रतापमित्यस्य स्थाने उग्ररूपमिति प्रयुक्तम्।]

६.११.७३ चण्डमूर्तिमन्त्रः

वि.२०.११७

चण्डम् उग्रं भयानकं द्वारपालकम्।

**६.११.७४ प्रचण्डमूर्तिमन्त्रः**

**वि.२०.११७**

प्रचण्डं भीमं घोररूपं द्वाराधिपम्।

**६.११.७५ विष्वक्सेनमूर्तिमन्त्रः**

**वि.२०.११७**

विष्वक्सेनं शान्तं हरम् अमितम्।

**स.३६.६९,७० ; ज्ञा.७४.१३८**

**६.११.७६ श्रीभूतमूर्तिमन्त्रः**

**वि.२०.११७**

श्रीभूतं श्वेतवर्णं वैष्णवं मुखपालिनम्।।

**स.३६.२५ ; ज्ञा.७४.१३८**

**६.११.७७ गरुडमूर्तिमन्त्रः**

**वि.२०.११८**

गरुडं पक्षिराजं सुवर्णं खगाधिपम्।

**ज्ञा.७४.१३८**

**स.३६.७०,७१**

[अत्र सुवर्णमित्यस्य स्थाने सुपर्णकम् इति प्रयुक्तम्।]

**नि.२५**

--------------- सर्वैश्वर्यभवं तथा।

सर्वानुत्तममित्युक्तं गरुत्मन्तं तथैव च।।

सौवर्णमणिमित्युक्तं गरुडं गरुडस्य वै।

**वा.२४**

खगाधिपं विहङ्गं च वैनतेयं सुपर्णकम्।

**६.११.७८ सुदर्शनमूर्तिमन्त्रः**

**वि.२०.११८**

सुदर्शनं चक्रं सहस्रविचम् अनपायिनम्।

**स.३६.७३ ; ज्ञा.७४.१३८**

**६.११.७९ पाञ्चजन्यमूर्तिमन्त्रः**

**वि.२०.११८**

पाञ्चजन्यं शङ्खम् अम्बुजं विष्णुप्रियम्

**स.३६.७४,७५ ; ज्ञा.७४.१३८**

**नि.२५**

पाञ्चजन्यं सुखं तीर्थं सेनाध्यक्षं च पावनम् ।

**६.११.८० जयमूर्तिमन्त्रः**

**वि.२०.११९**

जयम् अत्युच्छ्रितं धन्यं ध्वजम्।

**स.३६.७४ ; ज्ञा.७४.१३८**

**६.११.८१ महाभूतमूर्तिमन्त्रः**

**वि.२०.११९**

यूथाधिपतिं नित्यम् उग्रं महाभूतम्।

**स.३६.७५ ; ज्ञा.७४. १३८**

**६.११.८२ पाकोर्जुनमूर्तिमन्त्रः**

**वि.२०.११९**

अर्जुनं हस्तम् अक्षहन्तारं विष्णुभूतम्।

**स.३६.७६**

**ज्ञा.७४.१३८**

[अत्र अर्जुनमित्यस्य स्थाने पाकोऽर्जुनमिति प्रयुक्तम्।]

**६.११.८३ आदित्यमूर्तिमन्त्रः**

**वि.२०.१२०**

आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वन्तम्।

**स.३६.३२ ; ज्ञा.७४.१३६; नि.२५**

**खि.४३.४६, ४७**

तपनं सूर्यदासं च तथा लोकप्रवर्तकम्।।

विघ्नहन्तारम् -------------------।

**६.११.८४ सुवर्चलामूर्तिमन्त्रः**

**खि.४३.७४**

सुवर्चलामुषाञ्चेति श्यामलां सुप्रभाम्।।

**६.११.८५ रेणुकामूर्तिमन्त्रः**

**खि.४३.७५**

रेणुकां रक्तवर्णां च तथा चैव रविप्रियाम्।

श्वेतवस्त्राम् ---------------------।।

**६.११.८६ स्थूलदण्डमूर्तिमन्त्रः**

**खि.४३.७५**

स्थूलदण्डं महानादं प्रवालाभं शुचिम्।

**६.११.८७ शङ्खपालमूर्तिमन्त्रः**

**खि.४३.७६**

शङ्खपालं शङ्खनिभं कूर्चकहस्तं जटाधरम्।।

**६.११.८८ प्राक्सन्ध्यामूर्तिमन्त्रः**

**खि.४३.७७**

प्राचीं सन्ध्यां तथा रक्तां विश्वबोधाम्।।

**६.११.८९ पश्चिमसन्ध्यामूर्तिमन्त्रः**

**खि.४३.७८**

जगद्धितां जगत्पूज्यां धूम्रवर्णां निशामुखीम्।।

**६.११.९० गायत्रीमूर्तिमन्त्रः**

**खि.४३.८०**

गायत्रीं पावनीं जप्यां वेदगर्भाम्।

**६.११.९१ सावित्रीमूर्तिमन्त्रः**

**खि.४३.८१**

सावित्रीं वेदमातरं ब्रह्मपत्नीं जगत्प्रियाम्।

**६.११.९२ सप्ताश्वमूर्तिमन्त्रः**

**खि.४३.८३**

सप्ताश्वान् शुक्लवर्णान् महाजवान् रत्नखुराम्।

**६.११.९३ अरुणमूर्तिमन्त्रः**

**खि.४३.८४**

अरुणं रश्मिहस्तं काश्यपं सूर्यसारथिम्।

**६.११.९४ भूतनाथमूर्तिमन्त्रः**

**खि.४३.८७, ८८**

भूतनाथं बहिर्मुखं महोधरं महाभूतम्।

**६.११.९५ चन्द्रमूर्तिमन्त्रः**

**वि.२०.१२०**

वसिष्ठं सोमं यज्ञाङ्गम् इन्दुमतिं चन्द्रम्।

**स.३६.३७,३८ ; ज्ञा.७४.१३६, १३७; नि.२५**

**६.११.९६ अङ्गारकमूर्तिमन्त्रः**

**वि.२०.१२०**

अङ्गारकं वक्रं रक्तं धरासुतम्।

**स.३६.३३ ; ज्ञा.७४.१३६; नि.२५**

**६.११.९७ बुधमूर्तिमन्त्रः**

**वि.२०.१२०**

बुधं श्यामं सौम्यं श्रविष्ठाजम्।

**स.३६.३५ ; ज्ञा.७४.१३६; नि.२५**

**६.११.९८ बृहस्पतिमूर्तिमन्त्रः**

**वि.२०.१२१**

पीतवर्णं गुरुं तैष्यं बृहस्पतिम्।

**स.३६.३४,३५ ; ज्ञा.७४.१३६; नि.२५**

**६.११.९९ शुक्रमूर्तिमन्त्रः**

**वि.२०.१२१**

शुक्रं भार्गवं काव्यं परिसर्पिणम्।

**स.३६.३६ ; ज्ञा.७४.१३६; नि.२५**

**६.११.१०० मन्दमूर्तिमन्त्रः**

**वि.२०.१२१**

सूर्यपुत्रं मन्दं रैवत्यं शनैश्चरम्।

**स.३६.३३,३४ ; ज्ञा.७४.१३६; नि.२५**

**६.११.१०१ राहुमूर्तिमन्त्रः**

**वि.२०.१२१**

राहुं दैतेयम् उरगेशं ग्राहकम्।

**नि.२५**

स्वर्भानुं चैव वाराहं ----- विधुन्तुदम्।

**६.११.१०२ केतुमूर्तिमन्त्रः**

**वि.२०.१२२**

केतुं कृष्णं रौद्रं प्रकाशिनम्।

**नि.२५**

केतुं च शिखिनं चैव------।

**६.११.१०३ गङ्गामूर्तिमन्त्रः**

**वि.२०.१२२**

नलिनीं जाह्नवीं गङ्गां लोकपावनीम्।

**स.३६.३६, ३७ ; ज्ञा.७४.१३६**

**६.११.१०४ यमुनामूर्तिमन्त्रः**

**वि.२०.१२२**

यमुनां स्थापिकां नदीवरां पावनीम्।

**६.११.१०५ नर्मदामूर्तिमन्त्रः**

**वि.२०.१२२**

नर्मदां नदीवरां विद्युद्रूपां विशालाम्।

६.११.१०६ सिन्धुमूर्तिमन्त्रः

वि.२०.१२३

सिन्धुं नदीवरां मृद्वङ्गीं साधनाम्।

६.११.१०७ दुर्गामूर्तिमन्त्रः

वि.२०.१२३

दुर्गां कात्यायनीं वैष्णवीं विन्ध्यवासिनीम्।

स.३६.४३,४४ ; ज्ञा.७४.१३७ खि.पृ.५५३, १२८

६.११.१०८ उमामूर्तिमन्त्रः

खि.पृ.५४३ , १३०

उमाञ्च पार्वतञ्चेति रुद्रपत्नीं सुखप्रदाम्।

६.११.१०९ अङ्गिरोमूर्तिमन्त्रः

खि.पृ.५४३. १३१

तपोनिधिञ्चाङ्गिरसमग्निवर्णं तपोमयम्।

६.११.११० मृकण्डुमूर्तिमन्त्रः

खि.पृ.५४३.१३२

मृकण्डुं मुनिमुख्यञ्च तापसञ्च पुरातनम्।

**६.११.१११ गङ्गामूर्तिमन्त्रः**

**खि.पृ. ५४३.१३४**

गङ्गाञ्च पावनीञ्चेति पुण्यां त्रिपथगामिनीम्।

**६.११.११२ यमुनामूर्तिमन्त्रः**

**खि.पृ. ५४३. १३५**

यमुनाञ्च नदीमुखां नीलवर्णां यशस्विनीम्।

**६.११.११३ अदितिमूर्तिमन्त्रः**

**खि.पृ. ५४३. १३६**

अदितिं पुण्यां दाक्षायणीं देवमातरम्।

**६.११.११४ दितिमूर्तिमन्त्रः**

**खि.पृ. ५४३. १३७**

दितिञ्चासुरमातरं प्रजावतीं कश्यपप्रियाम्।

**६.११.११५ मृगेन्द्रमूर्तिमन्त्रः**

**खि.पृ.५४४.१३८**

मृगेन्द्रं मृगराजञ्च महानादं महाबलम्।

**६.११.११६ उग्रसेनमूर्तिमन्त्रः**

**खि.पृ.५४४. १४०**

उग्रसेनं महावीर्यं शूलपाणिं सुरप्रियम्।

**६.११.११७ जयन्तमूर्तिमन्त्रः**

**खि.पृ.५४४. १४०**

जयन्तं धर्मनिष्टञ्च दण्डहस्तं यक्षमुख्यम्

**६.११.११८ कुम्भोदरमूर्तिमन्त्रः**

**खि.पृ.५४४.१४१**

कुम्भोदरं महाभूतं दुर्गाभक्तं बलोत्कटम्।

**६.११.११९ सरस्वतीमूर्तिमन्त्रः**

**वि.२०.१२३**

सिद्धिं विश्वां भृगुपत्नीं सरस्वतीम्।

**स.३६.५८ ; ज्ञा.७४.१३७**

**६.११.१२० ज्येष्ठामूर्तिमन्त्रः**

**वि.२०.१२३**

भूर्ज्येष्ठायिनीं भुवर्ज्येष्ठायिनीं सुवर्ज्येष्ठायिनीं कलिराजायनीं कलिपत्नीम्

**स.३६.४२,४३ ; ज्ञा.७४.१३७**

**६.११.१२१ ऋषभाङ्कमूर्तिमन्त्रः**

**खि.पृ. ५२५, ८९**

ऋषभाङ्कं कुमारं सर्वविघ्नापहं विघ्ननाशम्

**६.११.१२२ सुकन्यामूर्तिमन्त्रः**

**खि.पृ. ५२५, श्लो. ९०**

सुकन्यां मेदिनीं सादनन्दां जगद्धिताम्।

**६.११.१२३ धात्रीमूर्तिमन्त्रः**

**वि.२०.१२४**

धात्रीं महोदरीं रौद्रीं महाकालीम्।

**स.३६.४१ ; ज्ञा.७४.१३७**

**नि.२५**

धात्रीं चैव महारौद्रीं सर्वमातरमेव च।

**६.११.१२४ सुरामूर्तिमन्त्रः**

**वि.२०.१२४**

सुरां सुमुखीं विद्युद्रूपां सुभगाम्।

**६.११.१२५ सुन्दरीमूर्तिमन्त्रः**

**वि.२०.१२४**

सुन्दरीं विशालां पद्माक्षीं पद्मवर्णिनीम्।

**६.११.१२६ स्वाहामूर्तिमन्त्रः**

**वि.२०.१२४**

स्वाहां शुभाङ्गीं मृद्वङ्गीं साधनाम्।

**नि.२५**

स्वाहां वपुष्मतीं चैव पुष्कलाङ्गरवां तथा।

**६.११.१२७ स्वधामूर्तिमन्त्रः**

**वि.२०.१२५**

स्वधां समृद्धिं कुलवर्धिनीं सन्नतिम्।

**नि.२५**

स्वधामिषुमतीं चैव अमृतां पितृतर्पिणीम्।

**६.११.१२८ संह्लादिनीमूर्तिमन्त्रः**

**वि.२०.१२५**

संह्लादिनीं वरारोहां मायाङ्गीं मुदवर्धिनीम्।

**६.११.१२९ राकामूर्तिमन्त्रः**

**वि.२०.१२५**

राकां मुख्यां रत्नाङ्गीं वराननाम्।

**६.११.१३० सिनीवालीमूर्तिमन्त्रः**

**वि.२०.१२५**

सिनीवालीं हितदां गभस्तिनीं पुण्यदाम्।

**६.११.१३१ हवीरक्षकमूर्तिमन्त्रः**

**वि.२०.१२६**

हवीरक्षकम् आग्नेयं पचनं शैलूषम्।

**स.३६.६२,६३ ; ज्ञा.७४.१३७**

**६.११.१३२ पुष्परक्षकमूर्तिमन्त्रः**

**वि.२०.१२६**

पुष्परक्षकं हरितम् अधिवासं फुल्लम्।

**स.३६.६८ ; ज्ञा.७४.१३८**

**६.११.१३३ त्वष्टृमूर्तिमन्त्रः**

**वि.२०.१२६**

त्वष्टारं रूपजातं निधिजं प्लोताधिपम्।

**६.११.१३४ गदामूर्तिमन्त्रः**

**वि. २०. १२६**

गदां कौमोदकीं पुण्यां प्रबलाम्।

**ज्ञा. ७४. १३८**

गदां सुसङ्गनां दिव्यां कौमोदकीमिति गदाम्।

**६.११.१३५ चामुण्डमूर्तिमन्त्रः**

**वि.२०.१२७**

सर्वेश्वरं जगन्नाथं चामुण्डं सर्वतश्चरम्।

**स.३६.६३ ; ज्ञा.७४.१३७**

**६.११.१३६ बलिरक्षकमूर्तिमन्त्रः**

**वि.२०.१२७**

बलिरक्षकं दण्डं सर्पजं समम्।

**स.३६.६८,६९ ; ज्ञा.७४.१३८**

**६.११.१३७ गविष्ठमूर्तिमन्त्रः**

**वि.२०.१२७**

गविष्ठं त्रैष्टुभं गुह्यम् आकाशम्।

**स.३६.५४,५५**

[अत्र गुह्यमित्यस्य स्थाने अभ्यमिति प्रयुक्तम्।]

**ज्ञा.७४.१३७**

[अत्र इभ्यमिति प्रयुक्तम्।]

**६.११.१३८ तोयमूर्तिमन्त्रः**

**वि.२०.१२७**

पवित्रम् अमृतं तोयं गह्वरम्।

**स.३६. ५६,५७; ज्ञा.७४.१३७**

**६.११.१३९ अग्निमूर्तिमन्त्रः**

**वि.२०.१२८**

वीतिहोत्रं भुरण्यं शुद्धमग्निम्।

**ज्ञा.७४.१३७**

[अत्र आभुरण्यमिति प्रयुक्तम्।]

**स. ३६.५६**

[अत्र हिरण्यमिति प्रयुक्तम्।]

**६.११.१४० वायुमूर्तिमन्त्रः**

**वि.२०.१२८**

असुं समीरणं वायुं पृषदश्वम्।

**स.३६. ५५,५६ ; ज्ञा.७४.१३७**

**६.११.१४१ ऋग्वेदमूर्तिमन्त्रः**

**वि.२०.१२८**

ऋचं मधुं सोमं क्रतुम्।

**६.११.१४२ यजुर्वेदमूर्तिमन्त्रः**

**वि.२०.१२८**

यजुर्वेदं दधि मिश्रम् इष्टिम्।

**६.११.१४३ सामवेदमूर्तिमन्त्रः**

**वि.२०.१२८**

साम घृतं वज्रं यज्ञम्।

**६.११.१४४ अथर्ववेदमूर्तिमन्त्रः**

**वि.२०.१२९**

अथर्वणं पवित्रं क्षीरं पुण्यम्।

**६.११.१४५ काश्यपमूर्तिमन्त्रः**

**वि.२०.१२९**

काश्यपं विश्वमूर्तिम् अक्षतं तक्षकम्।

**६.११.१४६ गुहमूर्तिमन्त्रः**

**वि.२०.१३०**

जगद्भुवं यजद्भुवं विश्वभुवं रुद्रभुवं ब्रह्मभुवं भुवद्भुवम्।

**स.३६.३९, ४० ; ज्ञा.७४. १३७**

**६.११.१४७ पङ्क्तीशमूर्तिमन्त्रः**

**वि.२०.१३०**

पङ्क्तीशं मित्रं वरदं भूतनायकम्।

**६.११.१४८ पवित्रमूर्तिमन्त्रः**

**वि.२०.१३०**

पवित्रं मन्त्रं जप्यं शुद्धम्।

**६.११.१४९ पावनमूर्तिमन्त्रः**

**वि.२०.१३०**

सर्वतीर्थजलं पुण्यं पावनं पुण्यपूजितम्।

**६.११.१५० तक्षकमूर्तिमन्त्रः**

**वि.२०.१३०**

तक्षकं सर्पराजं क्षितिजं धराधरम्।

**६.११.१५१ कुहूमूर्तिमन्त्रः**

**वि.२०.१३१**

मेदिनीं कुहूं सुदंष्ट्रां क्षमाम्।

**६.११.१५२ अनुमतिमूर्तिमन्त्रः**

**वि.२०.१३१**

अनुमतिं स्वरूपां तन्वङ्गीं सुभगाम्।

**६.११.१५३ ब्रह्माणीमूर्तिमन्त्रः**

**वि.२०.१३१**

ब्रह्माणीं पिङ्गलां गौरीं सर्वतोमुखीम्।

**स.३६.६४ ; ज्ञा.७४. १३८**

**६.११.१५४ सरित्प्रियामूर्तिमन्त्रः**

**वि.२०. १३१**

सरित्प्रियां विश्वरूपाम् उग्रां गणेश्वरीम्।

**स.३६.६४ ; ज्ञा.७४.१३८**

६.११.१५५ वैशाखिनीमूर्तिमन्त्रः

वि.२०.१३१, १३२

वैशाखिनीं शिखण्डिनीं गायत्रीं षण्मुखीम्।

स.३६.६५ ; ज्ञा.७४.१३८

६.११.१५६ रोहिणीमूर्तिमन्त्रः

वि.२०.१३२

विश्वगर्भां विषोर्मिणीं कृष्णां रोहिणीम्।

स.३६.६५ ; ज्ञा.७४.१३८

६.११.१५७ वाराहीमूर्तिमन्त्रः

वि.२०.१३२

वाराहीं वरदाम् उर्वीं वज्रदंष्ट्राम्।

स.३६.६६ ; ज्ञा.७४.१३८

६.११.१५८ इन्द्राणीमूर्तिमन्त्रः

वि.२०.१३२

जयन्तीं कौशिकीम् इन्द्राणीं घनाघनाम्।

स.३६.६६ ; ज्ञा.७४.१३८

६.११.१५९ कालीमूर्तिमन्त्रः

वि.२०.१३२

कालीं नालिकादंष्ट्रां विषहां वेदधारिणीम्।

स.३६.६७ ; ज्ञा.७४.१३८

**६.११.१६० जयामूर्तिमन्त्रः**

**वि.२०.१३२**

जयां सुखप्रदां समृद्धिनीं भद्राम्।

**नि. २५**

**६.११.१६१ विजयामूर्तिमन्त्रः**

**वि.२०.१३२**

विजयां विशोकां पुण्यां कामानन्दाम्।

**६.११.१६२ विन्दामूर्तिमन्त्रः**

**वि.२०.१३२**

विन्दां लाभाम् अप्रमत्ताम् अजेयाम्।

**६.११.१६३ पुष्टिकामूर्तिमन्त्रः**

**वि.२०.१३२**

पुष्टिकाम् अमोघवतीं पुण्यां प्रमत्ताम्।

**६.११.१६४ नन्दकामूर्तिमन्त्रः**

**वि.२०.१३२**

नन्दकां मधुजननीं सुमुक्तां सुभगाम्।

**६.११.१६५ कुमुद्वतीमूर्तिमन्त्रः**

**वि.२०.१३२**

कुमुद्वतीं सुवहां सुसम्भरां निर्वृतिम्।

६.११.१६६ उत्पलकामूर्तिमन्त्रः

वि.२०.१३२

उत्पलकां सुगन्धिनीं सर्वामोदां सर्वात्मिकाम्।

नि.२५

विवर्धिनीमुत्पलकां सत्यामोदां तथैव च।

६.११.१६७ विशोकामूर्तिमन्त्रः

वि.२०.१३२

विशोकां धनराशिं कामानन्दां अक्षताममिताम्।

नि.२५

६.११.१६८ कुण्ठिनीमूर्तिमन्त्रः

वि.२०.१३३

कुण्ठिनीं नन्दिनीं धरित्रीं रजतप्रियाम्।

स.३६. ४४,४५; ज्ञा.७४.१३७

६.११.१६९ ग्रन्थिनीमूर्तिमन्त्रः

वि.२०.१३३

ग्रन्थिनीं वेगिनीं प्रजयां प्रबर्हिणीम्।

स.३६.४५

ज्ञा.७४.१३७

[अत्र प्रबर्हिणीमित्यस्य स्थाने प्रवहिनीमिति प्रयुक्तम्।]

**६.११.१७० कृच्छ्रिणीमूर्तिमन्त्रः**

**वि.२०.१३३**

कृच्छ्रिणीं शाखिनीं, वाहिनीं योक्त्रिणीम्।

**स.३६.४६ ; ज्ञा.७४.१३७**

**६.११.१७१ कुण्डिनीमूर्तिमन्त्रः**

**वि.२०.१३३**

कुण्डिनीं जारिणीं छर्दिनीं प्रवाहिणीम्।

**ज्ञा.७४.१३७**

**स.३६.४६,४७**

------------ कुशिनीं दंशिनीमिति।।

छर्दिनीं वाहिनीं चेति कुण्ठिनीं च----।

**६.११.१७२ विकारिणीमूर्तिमन्त्रः**

**वि.२०.१३३**

विकारिणीं दामिनीं बैसिनीं विद्युताम्।

**स.३६.४७ ; ज्ञा.७४.१३७**

**६.११.१७३ दद्रुणीमूर्तिमन्त्रः**

**वि.२०.१३३**

दद्रुणीम् इन्दुकरां सौमनसीं प्रविद्युतम्।

**स.३६.४८ ; ज्ञा.७४.१३७**

**६.११.१७४ इन्द्रियविकारिणीमूर्तिमन्त्रः**

**वि.२०.१३३**

इन्द्रियविकारिणीम् अर्वन्तीं गङ्गावाणीं सृजन्तीम्।

**स.३६.४८,४९ ; ज्ञा.७४.१३७**

**६.११.१७५ वत्सरमूर्तिमन्त्रः**

**वि.२०.१३३**

वत्सरान् वसुसुतान् निधीन् धर्मसूनुकान्।

**६.११.१७६ प्राणादिमूर्तिमन्त्रः**

**वि.२०.१३३**

प्राणमपानमुदानं व्यानं समानम्।

**६.११.१७७ मरुन्मूर्तिमन्त्रः**

**वि.२०.१३३**

मरुतो लोकधरान् सप्तसप्तगणान् मुरुद्वतीसुतान्।

**६.११.१७८ शतरुद्रमूर्तिमन्त्रः**

**वि.२०.१३४**

शतरुद्रान् ओषधीशान् त्र्यम्बकान् कपालपाणीन्।

**६.११.१७९ एकादशरुद्रमूर्तिमन्त्रः**

**वि.२०.१३४**

अजैकपादम् अहिर्बुध्निं पिनाकिनम् अपराजितं मृगव्याधं शर्वं निर्ऋतिम् ईश्वरं कपालिनं भवं स्थाणुम्।

**६.११.१८० द्वादशादित्यमूर्तिमन्त्रः**

**वि.२०.१३४**

धातारम् अर्यमणम् अंशुं मित्रं वरुणं भगम् इन्द्रं विवस्वन्तं पूषणं पर्जन्यं त्वष्टारं विष्णुम्।

**६.११.१८१ गन्धर्वमूर्तिमन्त्रः**

**वि.२०.१३४**

गन्धर्वान् रम्यान् सुरजान् सोमजान्।

**६.११.१८२ मुनिमूर्तिमन्त्रः**

**वि.२०.१३५**

मुनीन् तपोधिपान् कृशान् पापविनाशनान्।

**६.११.१८३ अप्सरोमूर्तिमन्त्रः**

**वि.२०.१३५**

अप्सरसः अमृतजाः भोगवहाः स्वरजाः

**६.११.१८४ अश्विमूर्तिमन्त्रः**

**वि.२०.१३५**

अश्विनौ यमजौ युग्मौ त्वाष्ट्रीपुत्रौ।

**६.११.१८५ वसुमूर्तिमन्त्रः**

**वि.२०.१३५**

धरं ध्रुवं सोमम् अपोऽनलम् अनिलं प्रत्यूषं प्रभासम्।

**६.११.१८६ नासत्यमूर्तिमन्त्रः**

**वि.४४.२९८**

नासत्यं दिव्यं विवस्वत्पुत्रम् अश्विनम्

**६.११.१८७ दस्रमूर्तिमन्त्रः**

**वि.४४.२९८**

दस्रं (विवस्वत्?) पुत्रं सर्वज्ञं देवसुन्दरम्

**६.११.१८८ विद्याधरमूर्तिमन्त्रः**

**वि.२०.१३६**

विद्याधरान् मन्त्रबलान् पुष्पजान् भोगजान्।

**६.११.१८९ तुम्बुरुमूर्तिमन्त्रः**

**वि.२०.१३६**

तुम्बुरुं मुनिवरं स्वरेशं वेदरूपिणम्।

**६.११.१९० नारदमूर्तिमन्त्रः**

**वि.२०.१३६**

नारदं मुनिवरं गानरूपं ब्रह्मसम्भवम्।

**६.११.१९१ ऋतुमूर्तिमन्त्रः**

**वि.२०.१३६**

ऋतून् भराशीन् गन्धर्वान् तीर्थान्।

**६.११.१९२ मुद्गलमूर्तिमन्त्रः**

**वि.२०.१३७**

मुद्गलं मुनिवरं शुद्धं सर्वज्ञम्।

**६.११.१९३ हलेशमूर्तिमन्त्रः**

**वि.२०.१३७**

हलेशं महाबलं मायाङ्गं वरदायिनम्।

**६.११.१९४ जाम्बवमूर्तिमन्त्रः**

**वि.२०.१३७**

जाम्बवं बालरूपं दर्शनीयं सुन्दरम्।

**६.११.१९५ असुरमूर्तिमन्त्रः**

**वि.२०.१३८**

असुरं दैतेयं घोररूपं भयानकम्।

**६.११.१९६ किन्नरमिथुनमूर्तिमन्त्रः**

**वि.२०.१३८**

किन्नरमिथुनं तीर्थं सङ्गीतं पक्षिरूपिणम्।

**६.११.१९७ प्रह्लादमूर्तिमन्त्रः**

**वि.२०.१३८**

प्रह्लादं प्रजाननं विष्णुभक्तं गदाधरम्।

**६.११.१९८ मदनमूर्तिमन्त्रः**

**वि.२०.१३८**

मदनं कामं सुन्दरं दिव्यरूपम्।

**६.११.१९९ विपामूर्तिमन्त्रः**

**वि.२०.१३९**

विपां विद्युद्रूपां विशालाङ्गीं मेधाम्।

**६.११.२०० व्याजिनीमूर्तिमन्त्रः**

**वि.२०.१३९**

व्याजिनीं सुभगां सुन्दरीं विशुद्धाम्।

**६.११.२०१ कामिनीमूर्तिमन्त्रः**

**वि.२०.१३९**

कामिनीं कान्तां शुभाङ्गीं विमलाम्।

**६.११.२०२ चन्द्राभामूर्तिमन्त्रः**

**वि.२०.१३९**

चन्द्राभां तन्वङ्गीं, श्वेतरूपां दृढव्रताम्।

**६.११.२०३ सुन्दरमूर्तिमन्त्रः**

**वि.२०.१३९**

सुन्दरं सुरप्रियं शुभानन्दं सौम्यम्।

**६.११.२०४ मत्स्यमूर्तिमन्त्रः**

**वि.२१.१४२**

मत्स्यं प्रळयसंहारं स्रष्टारं वेदमयम्।

**६.११.२०५ कूर्ममूर्तिमन्त्रः**

**वि.२१.१४२**

कूर्मरूपं सुधाकरं महाशक्तिं महाबलम्।

**६.११.२०६ राघवमूर्तिमन्त्रः**

**वि.२१.१४३**

रामं दाशरथिं वीरं काकुत्स्थम्।

**६.११.२०७ सीतामूर्तिमन्त्रः**

**वि.२१.१४३**

सीतामयोनिजां लक्ष्मीं वैदेहीम्।

**६.११.२०८ सौमित्रिमूर्तिमन्त्रः**

**वि.२१.१४४**

रामानुजं सौमित्रिं लक्ष्मणं लक्ष्मीवर्धनम्।

**६.११.२०९ भरतमूर्तिमन्त्रः**

**वि.२१.१४४**

भरतं कैकेयं रामानुजं धर्मचारिणम्।

**६.११.२१० शत्रुघ्नमूर्तिमन्त्रः**

**वि.२१.१४४**

रामप्रियं शत्रुघ्नं विजयं भरतानुजम्।

**६.११.२११ हनुमन्मूर्तिमन्त्रः**

**वि.२१.१४५**

कपिराजं हनुमन्तं शब्दराशिं महामतिम्।

**६.११.२१२ शरमूर्तिमन्त्रः**

**वि.२१.१४५**

शरं महारवम् अमोघं तीक्ष्णधारम्।

**६.११.२१३ सुग्रीवमूर्तिमन्त्रः**

**वि.२१.१४५**

सुग्रीवं सुन्दरं महाबलमर्कसूनुम्।

**६.११.२१४ विभीषणमूर्तिमन्त्रः**

**वि.२१.१४५**

विभीषणं राक्षसाधिपं सुमनस्कं रामप्रियम्।

**६.११.२१५ अङ्गदमूर्तिमन्त्रः**

**वि.२१.१४६**

अङ्गदं वालिपुत्रं रामप्रियं देवभक्तम्।

**६.११.२१६ बलराममूर्तिमन्त्रः**

**वि.२१.१४६**

रामं यदुवरं विष्णुं हलायुधम्।

**६.११.२१७ कृष्णमूर्तिमन्त्रः**

**वि.२१.१४६**

कृष्णं पुण्यनारायणं वटपत्रशायिनं त्रिदशाधिपम्।

**६.११.२१८ रुक्मिणीमूर्तिमन्त्रः**

**वि.२१.१४६**

रुक्मिणीं सुन्दरीं प्रकृतिं कृष्णवल्लभाम्।

**६.११.२१९ सत्यभामामूर्तिमन्त्रः**

**वि.२१.१४६**

सत्यभामां सतीं सन्नतीं क्षमाम्।

**६.११.२२० गोपालमूर्तिमन्त्रः**

**वि.२१.१४७**

गोपालं सर्वनाथं कृष्णं सर्वाध्यक्षम्।

**६.११.२२१ श्रीदाममूर्तिमन्त्रः**

**वि.२१.१४७**

श्रीदामानं पुण्यरूपं पुण्यात्मकं देवसखम्।

**६.११.२२२ सुन्दरमूर्तिमन्त्रः**

**वि.२१.१४७**

सुन्दरं विहङ्गं पतङ्गं तार्क्ष्यम्।

### ६.११.२२३ धृतिपौष्ण्योःमूर्तिमन्त्रः

**खि.२१.१७ १८**

धृतिं रामां दक्षसुतां सत्यपत्नीं तंथा पुनः।
पौष्णीं च वरदामुर्वीं पृथिवीम् इति चोच्चरन्।।

सत्यस्य देव्यावभ्यर्चेद् देव्यै दक्षिणवामयोः।

### ६.११.२२४ पवित्रीमूर्तिमन्त्रः

**खि.२१, २२**

पवित्रीमिन्दिरां चेति लक्ष्मीं चैवाच्युतप्रियाम्।।

### ६.११.२२५ अनन्तमूर्तिमन्त्रः

**खि.२१.२४**

सिताङ्गमुग्रतपसं चिरायुषमनन्तकम्।

### ६.११.२२६ रमामूर्तिमन्त्रः

**खि.२१.२६**

प्रमोददायिनीं वरारोहामब्धिकन्यां रमाम् इति।

**खि.पृ.५४३, १२९**

रमां प्रीतिं पवित्रीं पद्मासनां।

**६.११.२२७ सावित्रीमूर्तिमन्त्रः**

**खि.२१.२८, २९**

-------------- सावित्रीं वेदमातरम्।।

गायत्रीं व्याहृतिं चैव

**६.११.२२८ धर्ममूर्तिमन्त्रः**

**खि.२१.३१**

धर्मं सत्यं शुभं पुण्यम्

**६.११.२२९ काममूर्तिमन्त्रः**

**खि.२१. ३४**

कामं मनोभवं चेति रतीशं मकरध्वजम्।।

**६.११.२३० नरमूर्तिमन्त्रः**

**खि.२१.३६**

सर्वाङ्गं च नरं चेति सर्वयोनिं सनातनम्।।

**वि.४४.२९९**

नरं पार्थं गुडाकेशं श्वेतवाहनम्

**६.११.२३१ अनन्तशयनमूर्तिमन्त्रः**

**खि.२१.४०, ४१**

शयनं चेत्तथा चोर्ध्वे अर्चयेत्तु विधानतः।

अनन्तशयनं चोक्त्वा अनादिनिधनं तथा।।

अमितमहिमानमित्युक्त्वा अत्यन्ताद्भुतमेव च।

शयानमर्चयेद्देवं मन्त्रैरेवं विधानतः।।

**६.११.२३२ तीर्थमूर्तिमन्त्रः**

**खि.२१.४७**

-------------- तीर्थं वामे समर्चयेत्।

तीर्थं च भवनं चेति मन्त्रसिद्धं महाबलम्।।

**६.११.२३३ शैषिकमूर्तिमन्त्रः**

**खि.२१.४८**

------------सुभूतिं सुमतिं तथा।

महाप्रभावम्

**वि.४४.२९८**

पुराणं भक्तिमन्तं भार्गवं चिरजीविनम्

## १२. [1]षडासनेषूपचाराः

### ६.१२.१ नित्यार्चने आसनपञ्चकस्य क्रमः

**वा.२७**

मन्त्रासनं ततः पूर्वं स्नानासनमतः परम्।
तृतीयं चाप्यलङ्‌कारं भोज्यासनमतः परम्।।

यात्रासनं च पञ्चैते कल्पयित्वा समन्त्रकम्।

### ६.१२.२ मन्त्रासने त्रयोदशोपचाराः

**वा.२४**

आवाहनासनार्घ्यं च पाद्यं स्वागतमेव च।
अनुमानं पादुकञ्च दर्पणं दन्तधावनम्।।

जिह्वाग्रशोधनं चैव मुखप्रक्षालनं तथा।
आचामं प्लोतवस्त्रं च तथा केशविकीरणम्।।

एवं त्रयोदशैर्भोगैः पूर्वं मन्त्रासनाश्रयः।

---

1.यद्यपि वासाधिकारे पञ्चासनानि प्रतिज्ञातानि तथापि पर्याङ्‌कासनस्यापि विवरणम् अत्रैव उपलभ्यते अतः षडासनानि इति अस्माभिः निर्दिष्टम्।

### ६.१२.३ मन्त्रासने पञ्चोपचाराः

**वा.२५**

आसनं पाद्यमर्घ्यं च आचामं मुखवासकम्।
पञ्चोपचारं देवस्य मन्त्रासनपरिग्रहे।।

### ६.१२.४ स्नानासने षट्त्रिंशदुपचाराः

**वा.२४**

आसनं स्नपनं पाद्यमाचामं प्लोतवस्त्रकम्।।

अलकामोचनं तैलं भोगकेशानुबन्धनम्।
पुष्पताम्बूलदानं च चामरं दन्तधावनम्।।

आम्लमामलकं पञ्चक्षीरमङ्गस्य शोधनम्।
वासो हरिद्रकलकं गन्धाम्बुस्नानमाचरेत्।।

वस्त्रं प्लोतं तथा दाममुत्तरीयोपवीतकम्।
पवित्रं कुङ्कुमं स्रक्चन्दनं धूपं च दीपकम्।।

शुद्धाभिषेकमाचामं कटकं वस्त्रवेष्टनम्।
आचामं पुष्पदामं च षट्त्रिंशत्स्नानविग्रहाः।।

**वा.२७**

आसनं च तथा पाद्यमाचामं तैलमेव च।
अलकाबन्धताम्बूलं तालव्यजनमेव च।।

अङ्गोद्वर्त्तनं केशशोधमाम्लेन तिन्त्रिणीम्।
हरिद्रालेपनं चैव पाद्यमाचमनं तथा।।

उत्तरीयोपवीतं च पवित्रं गन्धसाक्षतम्।

पुष्पदाम तथाऽऽवेष्ट्य वेदघोषणमेव च।।

द्रविडस्तोत्रशब्दैश्च शङ्खकाहलसंयुतम्।
सहस्रधाराशङ्खं च चूलिभ्यां पद्ममेव च।।

स्नानाचमननीराजप्लोतपुष्पाञ्जलिं तथा।
एवं षट्त्रिंशकैर्भोगैः द्वितीयस्नानासनाश्रयः।।

### ६.१२.५ स्नानासने अष्टोपचाराः

**वा. २४**

पादुकं दन्तमार्जं च तैलमुद्वर्तनं तथा।
शिरस्यामलकं तोयं कङ्कतं प्लोतमेव च।।

अष्टोपचारं देवस्य स्नानासनपरिग्रहे।

### ६.१२.६ अलङ्कारासने अष्टाविंशत्युपचाराः

**वा.२४**

अलङ्कारासने वस्त्रं कुङ्कुमं भूषणानि च।
उत्तरीयोपवीतञ्च पुष्पस्रग्गन्धमञ्जनम्।।

ऊर्ध्वपुण्ड्रं सुधूपस्स्याद्देवस्यादर्शनन्तथा।
स्तोत्रपाठं पादुकञ्च यानं रथवरं पुनः।।

तुरङ्गमो गणश्चैव नीराजनविलोकनम्।
आचामो धवलच्छत्रचामरं पञ्चवाद्यकम्।।

नृत्तमष्टाधिकाविंशदलङ्कारासने ददेत्।

**वा.२७**

आसने पादुकाभ्यां च प्लोतेन परिमार्ज्य च।
वस्त्रैर्नानाविधैश्चैव तथा केशान् विकीर्य च।।

कर्पूरागरूशीरं च चन्दनाद्याधिधूपकम्।
कङ्कतैर्भूषणैर्दत्वा उपवीतोत्तरीयकम्।।

पवित्रं स्रग्वेष्टनं चैव दर्पणं दर्शनं तथा।
गन्धलेपं च तिलकं धूपदीपान्तकं तथा।
अर्घ्याचमनदूर्वा च लक्ष्मीपुष्पाक्षतं तथा।।

देवस्य मूर्ध्नि चारोप्य दानकर्म तथैव च।
वीक्षयेद्वाहनादीनि सन्ध्यारक्षां समाचरेत्।।

छत्रचामरनृत्तं तु गेयं शब्दैश्च पञ्चकम्।
एवमष्टाधिकं विंशदलङ्कारासने ददेत्।

**नि.२३**

## ६.१२.७ अलङ्कारासने दशोपचाराः

**वा. २४**

वस्त्रं यज्ञोपवीतं च गन्धलेपनभूषणम्।।

पुष्पदामाञ्जनादर्श धूपदीपार्घ्यमेव च।
दशोपचारं देवस्य अलङ्कारासने ददेत्।।

## ६.१२.८ भोज्यासने षोडशोपचाराः

**वा.२७**

आसनोपान(द्)पाद्यं च आचामं मधुपर्ककम्।

आचामं तत्र हविषा पानीयाचमनं पुनः।।

शाटकेनास्यपाणिभ्यां विमृज्य च पुनः क्रमात्।
चन्दनाद्यादिगन्धैश्च विमृश्यास्यं च पाणिना।।

बाहुमाल्यं विसृज्यैव पुनर्दत्त्वा समाहितः।
ताम्बूलं निवेद्यैव पुष्पाञ्जलिमतः परम्।।

एवं षोडशभोगैश्च आसने भोज्य आचरेत्।

**वा.२४**

भोज्यासने पादुकञ्च पाद्यमाचमनक्रिया।।

क्षीरपानीयसूपाद्या भक्त्यमश्नाटके तथा।
ताम्बूलमुखवासान्तमुपचारास्तु षोडश।।

### ६.१२.९ भोज्यासने पञ्चोपचाराः

**वा. २४**

मधुपर्कं हविस्तत्र पानीयञ्चाग्निपूजनम्।
मुखवासं च पञ्चैते भोज्यासनपरिग्रहे।।

### ६.१२.१० यात्रासने षोडशोपचाराः

**वा.२७**

स्तुतिं ध्वजं च छत्रं च चामरं वाहनादिकम्।
नृत्तगेयं च धूपं च दीपसङ्ख्याद्वयं तथा।।

वीणावेणुद्वयं शृङ्गं मृदङ्गं घण्टया युतम्।
एवं षोडशभोगेन दत्वा यात्रासने बुधः।

प्रदक्षिणं तथावाप्य दत्वा पुष्पाञ्जलिं तथा।।

उद्वासनं तु सर्वत्र चासनं परिकल्पयेत्।

**६.१२.११ यात्रासने पञ्चोपचाराः**

**वा.२५**

स्तुतिर्ध्वजं च छत्रं च चामरं वाहनं तथा।

पञ्चोपचारं देवस्य यानासन इति स्मृतम्।।

**६.१२.१२ पर्यङ्कासने षडुपचाराः**

**वा.२४**

मृगनाभिश्च ताम्बूलं गन्धं पुष्पं तथैव च।

प्रदक्षिणनमस्कारौ पर्यङ्कासनसङ्ग्रहे।।

**६.१२.१३ अचलासनम्**

**अ.२६**

आवाह्य पश्चादुक्तं यत् अचलासनमुच्यते।

**६.१२.१४ चलासनम्**

**अ.२५**

आसनं कल्पयित्वैव देवं नयति तत्र च।।

एतच्चलासनं चास्मिन् पूजयेद्धरिमव्ययम्।

नानावस्त्रसमायुक्तं राजवद्वस्त्रमेव वा।।

# १३. मन्त्रासनम्

## ६.१३.१ मन्त्रासने उपचारसमर्पणम्

### प्र.१८.१०९ - ११९

ततो मन्त्रासनं विद्वान् सङ्कल्प्य च यथाविधि।।

'प्रतद्विष्णुस्तवते'ति तथाऽ 'स्त्वासन'मित्यपि।

पुष्पदर्भकुशेष्वेकं पीठान्ते चासनं ददेत्।।

'विश्वाधिकानां' मित्युक्त्या स्वागतं तु समाचरेत्।

'मनोऽभिमन्ता' मन्त्रेण देवेशमनुमान्य च।।

'त्रीणिपदे' ति मन्त्रेण दद्यात्पाद्यं पदद्वये।

'आमावाजस्य' मन्त्रेण देवेशमनुमान्य च।।

'देवस्यत्वे'ति मन्त्रेण चादर्शं दर्शयेत्ततः।

अन्नाद्याय समुच्चार्य दन्तधावनमाचरेत्।।

हिरण्मयं वा रौप्यं वा दन्तकाष्ठं षडङ्गुलम्।

औदुम्बरं वा सम्पाद्य यथालाभं समाचरेत्।।

'इदं ब्रह्मे' ति मन्त्रेण जिह्वाशोधनमाचरेत्।

'यन्मे गर्भे' समुच्चार्य गण्डूषं क्षालनं तथा।।

'शन्नोदेवी' रिति प्रोच्य दद्यादाचमनं ततः।

'विचक्रमे' समुच्चार्य मुखवासं प्रदापयेत्।।

पूर्ववस्त्रं विसृज्यैव परिधाप्यान्यवाससा।

ग्रीवायाः पृष्ठतः कुर्यादवकुण्ठनमादरात्।।

केशान्विकीर्य मन्त्रज्ञो वामभागे च सुस्थितः।

'उपानहा' विति प्रोच्य पुरस्तात्पादुके न्यसेत्।।

**वा.२५**

कुशदर्भं च पुष्पं वा कल्पयित्वा समन्त्रकम्।।

प्रतद्विष्णुरिति मन्त्रेण अस्त्वासनमिति ब्रुवन्।

एवं मन्त्रासनं कल्प्य पूर्वमेव समाहितः।।

साधितार्घ्यं समादाय स्पृष्ट्वा देवमनुस्मरन्।

त्रीणि पदेति मन्त्रेण तथैवेन्द्रोभिचोच्चरन्।

देवस्य पादौ प्रक्षाल्य तेन मन्त्रमुदीरयन्।।

विश्वाधिकानामित्युक्त्वा स्वागतं च समाचरेत्।

मनोभिमन्तामित्युक्त्वा याचयेदनुमानकम्।
उपानहावितीत्युक्त्वा पादुकं दापयेत्पुनः।।

तत्र आदर्शनं वीक्ष्य दन्तधावनमाचरेत्।
काष्ठं तु नारिकेलस्य चूतकाष्ठं तु वा हरेत्।।

वेदायामं तु कृत्वा तु षडङ्गुलमथापि वा।
रौक्मं वा राजतं वाऽथ कारयेदिति केचन।।

अन्नाद्यायेतिमन्त्रेण दन्तधावनमाचरेत्।
शोधयित्वा तु जिह्वाग्रं तेन मन्त्रमुदीरयन्।।

यन्मे गर्भेति मन्त्रेण मुखप्रक्षालनं चरेत्।
शं नो देवीत्युक्त्वा च दद्यादाचमनं बुधः।
पूर्ववस्त्रं विसृज्यैव चान्यद्दत्वा समाहितः।।

ग्रीवस्य पृष्ठाधः कृत्वा शुद्धवस्त्रेण वेष्टयेत्।
केशान्विकीर्य मन्त्रज्ञो वामभागे च सुस्थितः।।

एवमष्टोपचारं च प्रथमं विनियोगतः।

**खि.२०.६१ - ७३**

'भूः प्रपद्ये' ति देवेशं प्रणम्यैवानुमान्य च।

आलयादुत्तरे श्वभ्रे मण्डलान्युपलिप्य च।।

अलङ्कारं यथाशक्ति कारयित्वा विचक्षणः।

पीठञ्च तत्र सन्न्यस्य सर्वोपकरणानि च।।

अन्यान् यथेच्छं सम्भारान् यजमानेन सञ्चितान्।

सर्वांस्तत्र समानीय यथोक्तं स्नापयेद् बुधः।।

'परं रंह' इति मन्त्रेण देवमादाय चात्वरः।

'प्रतद्विष्णुस्तवत' इति स्नानपीठे निवेशयेत्।।

दूर्वाक्षतसमायुक्तं तोयं चात्र समाहरेत्।

उभाभ्यां चैव हस्ताभ्यां बिम्बे त्वारोप्य भक्तिमान्।।

पाददिमूर्धपर्यन्तमभिषिच्य पुनः पुनः।

'अन्नाद्यायेति' मन्त्रेण दन्तधावनमाचरेत्।।

'इदं ब्रह्मे' ति जिह्वायाः शोधनं कारयेद्बुधः।

'यन्मे गर्भेति' मन्त्रेण मुखप्रक्षालनं चरेत्।।

दद्यादाचमनीयञ्च 'योगे योग' इति ब्रुवन्।

विचक्रमेति मन्त्रेण मुखवासं ददेद्धरेः।।

पुनराचमनीयं च दत्वा प्लोतेन सम्मृजेत्।

सर्वाङ्गं च विमृज्यैव सूक्ष्मवस्त्रेण मन्त्रवित्।।

'तेजो वा'इति वस्त्रेण सञ्छाद्याचमनं ददेत्।

'सोमस्ये'त्युत्तरीयञ्च दद्यान्मन्त्रेण मन्त्रवित्।।

अलकाः शोधयेत्पश्चाद् 'अतो देवादि' मन्त्रतः।

सुगन्धतैलमादाय हस्ताभ्यां मस्तके तथा।।

कुर्यादभ्यञ्जनं चैव बन्धयेदलकांस्ततः।

मालालङ्करणं मूर्ध्नि 'तद्विष्णो' रुच्चरंश्चरेत्।।

गात्रेषु विष्णुगायत्र्या तैलमालेपयेच्छनैः।

वीजयेत्तालवृन्तैश्च ब्रुवन् 'वायुपरी'ति वै।।

**क्रि.९.५० - ५४**

'भूः प्रपद्ये'ति मन्त्रेण देवदेवं प्रणम्य च।

(परं रंहे)ति मन्त्रेण पीठादादाय चात्वरः।।

'प्रतद्विष्णुः स्तवत' इति विष्टरेऽभिमुखे न्यसेत्।

पादप्रक्षालनं कृत्वा 'त्रीणि पदे'ति मन्त्रतः।।

'शन्नो देवी'रिति जलं दद्यादाचमनं पुनः।

'अन्नाद्याये'ति मन्त्रेण दन्तधावनमाचरेत्।।

पुनराचमनं दत्वा 'देवस्य त्वे'ति दर्पणम्।

दर्शयित्वा तु ताम्बूलं 'विचक्रम' इति ब्रुवन्।।

निवेद्य ------------------------------।

## १४. स्नानासनम्

### ६.१४.१ भगवतः स्नापने अर्चकावस्थितिः

**ज्ञा.७३.१३४, १३५**

अभिमुखे द्विजानुभ्यामासीनस्तिष्ठन् वा तत्तद्बिम्बार्हकं स्नपनं कुर्यात्।

**खि. २२. १६५, १६७, १६८**

स्नपनं तु प्रतीपं वा समाविश्यापि कारयेत्।

------------------------------

पादाङ्गुलीर्जानुनी च भूमौ न्यस्य समाश्रितः।।

स्नपने पूजयेद्देवं स्थितौ वापि यथोचितम् ।

### ६.१४.२ स्नानासने उपचाराः

**खि.२०. ७४ - ९०**

स्नानासनं च सङ्कल्प्य पुण्याहं पूर्ववच्चरेत्।

यथोक्तं स्नपनं कुर्यात्कलशैः पञ्चभिस्ततः।।

वेदिं कृत्वा विधानेन व्रीहिभिर्वाथ तण्डुलैः।

कलशान् लोहजान् पञ्च क्षीराद्यैः परिपूर्य च।।

गन्धपुष्पैरलङ्कृत्य कूर्चं न्यस्याक्षतांस्तथा।

नारिकेलं च सन्न्यस्य तेषु चावाहयेत्क्रमात्।।

देवदेवं ससम्पूज्य पाद्यञ्चाचमनं ददेत्।

'परिलिखितम्' इति मन्त्रेण आम्लेन परिशोधयेत्।।

'वारीश्चतस्र' इत्युक्त्वा शोधयित्वाऽथ वारिणा।

'नमो वरुण' इत्युक्त्वा क्षीरेण स्नापयेद्धरिम्।।

'भूरानिलय' इत्युक्त्वा स्नापयेद् गन्धवारिणा।

वस्त्रादिभिरलङ्कृत्य धूपदीपौ च दर्शयेत्।।

फलादीनि निवेद्यैव कलशैः स्नापयेत्ततः।

स्वयं गत्वाऽऽसने स्थित्वा सङ्कल्प्याक्षतमर्चयेत्।।

कुम्भं गृहीत्वा देवस्य सन्निधौ न्यस्य पूर्ववत्।

योगमार्गेण कूर्चेन पुण्याहकलशोदकैः।।

मातृकां व्यापकं चैव स्थितिन्यासं च कारयेत्।

ध्यात्वा देवं चात्मसूक्तं जप्त्वा मन्त्रं च वैष्णवम्।।

कुम्भोदकेनाभिषिच्य पूजयेत्पुरुषोत्तमम्।

पूर्वसन्न्यस्तपात्रस्थतण्डुलान् नारिकेलकम्।।

युक्तनेत्राज्यवर्तिश्रीदीपमादाय मन्त्रवित्।
'शुभ्राज्योति'रिति प्रोच्य दीपं नीराजनाह्वयम्।।

त्रिः परिभ्रामयित्वा तु देवेशाय प्रदर्शयेत्।
सहस्रधारां सौवर्णीं राजतीं वाथ ताम्रकाम्।।

तथाविधौ शङ्खपद्मनिधी आदाय पूजकाः।
सहस्रधारापात्रं तु धृत्वा देवस्य मूर्धनि।।

निधिभ्यां तीर्थमादाय शीतमुष्णमथापि वा।
कुङ्कुमैः घनसारैश्च मिश्रितं शुभवासितम्।।

धारापात्रे चार्पयेयुः स्नापयेयुर्हरिं बुधाः।
चतुर्धा स्नपनं कृत्वा शुद्धोदैरभिषेचयेत्।।

'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतवस्त्रेण मार्जयेत्।
ततः कौतुकमादाय 'भूरसि भू' रिति ब्रुवन्।।

जीवस्थाने प्रतिष्ठाप्य प्रणमेद्देवमव्ययम्।

**स.४०. २६ - ३२ ; ज्ञा.६९. १२४;**

**अ.२३ ; खि.२४.४०,४१**

**य.३२. ३१ - ३३**

[अत्र 'इषे त्वोर्जेत्वेति जप्त्वा' इति मन्त्रप्रतीकः अतिरिक्तः।]

नि.२२ ; वि.४१.२८१

[यज्ञाधिकारवत्।]

प्र.१८.१२० - १३२

'भूः प्रपद्ये' समुच्चार्य प्रणम्य जगतां पतिम्।
'परं रंहे' ति मन्त्रेण समादाय तु कौतुकम्।।

स्वस्तिसूक्तं ततो जप्त्वा 'प्रतिद्विष्णु'रिति ब्रुवन्।
स्नानपीठे सुसंस्थाप्य पाद्यमाचमनं ददेत्।।

अतो देवादिमन्त्रैस्तु तैलमालिप्य मूर्धनि।
तथैव विष्णुगायत्र्या सर्वाङ्गाण्यनुलेपयेत्।।

'परिलिखित' मिति मन्त्रेण सर्वाङ्गमपि शोधयेत्।
आम्लेन खण्डशीकेन शर्कराभिर्यथोचितम्।।

अलकाशोधनं कुर्यात् श्रीपत्रामलकाम्बुना।
शालिपिष्टेन गन्धाद्यैः अङ्गशोधनमाचरेत्।।

विशदं शोधयित्वा तु संस्नाप्योष्णेन वारिणा।
'वारीश्चतस्र' इत्युक्त्वा शुद्धोदैरभिषेचयेत्।।

'नमो वरुण' इत्युक्त्वा गोक्षीरैरभिषेचयेत्।
'भूरानिलय'मन्त्रेण स्नापयेद् गन्धवारिणा।।

'अग्निमीले' समुच्चार्य मधुना स्नानमाचरेत्।
'सिनीवाली'ति मन्त्रेण हरिद्रोदकसेचनम्।।

तत्तद् द्रव्यान्तरे चैव भवेच्छुद्धोदकाप्लवः।
पुनर्गन्धोदकेनैव 'गन्धद्वारा'मुदीर्य च।।

स्नापयेद्देवदेवेशं तूर्यघोषपुरस्सरम्।
चतुर्वेदादिमन्त्रैश्च शुद्धोदैः स्नापयेत्पुनः।।

'मित्रस्सुपर्ण' इत्युक्त्वा विमृज्य प्लोतवाससा।
पूर्ववस्त्रं विसृज्यैव परीधाप्य तथेतरत्।।

पाद्यमाचमनं दद्यात् पूर्वोक्तेन विधानतः।
प्रणम्य देवदेवेशं दत्वा पुष्पाञ्जलिं ततः।।

'भूरसि भू' रित्युच्चार्य जीवस्थाने निवेशयेत्।
'त्रिर्देवू' मन्त्रमुच्चार्य दृश्यार्घ्यं तु समर्पयेत्।।

**वा.२६**

स्नानासनं पुनः कल्प्य पूर्वमन्त्रमुदीरयन्।।

प्रादक्षिण्यक्रमेणैव देवस्य परितोऽर्चयेत्।
अत्वरं देवमादाय परं रंहेति मन्त्रतः।।

संस्थाप्य देवदेवेशं पाद्यमाचमनं ददेत्।

सुगन्धसहितं तैलं स्नावयेद्देवमूर्धानि।।

'अतो देवा' दिमन्त्रेण देवमूर्धनि मर्दयेत्।
बन्धयित्वा तु केशान्वै स्रजा च परिवेष्टयेत्।।

आचाममुपहारं च मण्डतक्रं निवेदयेत्।
मिश्रित्य तैलकर्पूरैः ताम्बूलं च निवेदयेत्।।

स्कन्धाद्वस्त्रं विसृज्यैव वीजयेत्तालवृन्तकैः।
वायुपरीति मन्त्रेण तत्र कार्यं समाचरेत्।।

नारायणाय विद्मेति जप्त्वा देवमनुस्मरन्।
ललाटात्पादपर्यन्तं मर्दयित्वा विचक्षणः।।

परिलिखेति मन्त्रेण शोधनीयेन शोधयेत्।
शालिपिष्टैश्च गन्धैश्च देवाङ्गं विमृजेद् बुधः।।

अलकाशोधनं कुर्यात् श्रीपत्रामलकाम्बुना।
अन्यैश्च शोधनं कृत्वा आम्लाद्यैरुष्णवारिणा।
वारीश्चतस्त्र इत्युक्त्वा मौल्यादीन् क्षालयेत्तथा।।

अभिषेकं शनैः कृत्वा बेरशुद्धिं च कारयेत्।
इषेत्वोर्जेति जपन् यथा शुद्धिस्तथाचरेत्।।

नमो वरुणेति मन्त्रेण क्षीरेण स्नापयेद्बुधः।

—

सिनीवालीति मन्त्रेण हारिद्रं लेपयेत्सुधीः।।

द्रव्यैश्च तत्र संस्नाप्य देवदेवं प्रणम्य च।
भूरानिलयमन्त्रेण स्नापयेद् गन्धवारिणा।।

पूर्ववस्त्रं विसृज्यैव अन्यत्तत्परिधाप्य च।
पाद्यमाचमनं दत्वा पूर्वोक्तेनैव कारयेत्।।

उत्तरीयं ददेत्पश्चात् सोमस्य तनुरित्यपि।
उपवीतं ददेत्पश्चात् अग्निं दूतमिति ब्रुवन्।।

गन्धैश्चाक्षतपुष्पैश्च माल्यैरन्यैरलंकृतम् ।
वेदैः स्तोत्रैश्च संघोष्य द्राविडस्तुतिसंयुतेः।।

शङ्खकाहलसंयुक्तं नृत्तगेयसमन्वितम्।
'शतधारेति' मन्त्रेण जपित्वा मन्त्रवित्तमः।।

सहस्रधारामादाय परभागे च सुस्थितः।
मूर्धोपरि च हस्ताभ्यां धृत्वा देवमनुस्मरन्।।

शङ्खपद्मनिधिभ्यां च गृहीत्वोभयपार्श्वयोः।
एलालवङ्गोशीरादि गन्धयुक्तं सुशीतलम्।।

चषकस्थं घटस्थं वा तोयमादाय चात्वरः।
जलं शुद्धं च संगृह्य पुरुषसूक्तमनुस्मरन्।।

अभिषेकं शनैः कृत्वा पश्चादाचमनं ददेत्।
नीराजनं ततः कृत्वा 'शुभ्राज्योति'रिति ब्रुवन्।।

मित्रस्सुपर्ण इत्युक्त्वा प्लोतेन परिमृज्य च।
वस्त्रमाचमनं दत्वा पुष्पाञ्जलिमतः परम्।।

एवं द्वात्रिंशभोगैः स्नानकाले विनिर्दिशेत्।
जीवस्थाने प्रतिष्ठाप्य पुरुषसूक्तं समुच्चरन्।।

**क्रि. ९. ५४ - ६९**

तैलमादाय सोमं तत्र समर्चयन्।
'अतो देवे' ति मन्त्रेण तैलाभ्यङ्गं समाचरेत्।।

पुष्पैर्मूर्धानमावेष्ट्य प्रातःकालविकासिभिः।
मूर्धादिपादपर्यन्तं गन्धेनोद्वर्तयेत् पुनः।।

अथवा माषपिष्टेन शालिपिष्टेन वा तथा।
आलयस्योत्तरे वेदिमौपासनविधानतः।।

कृत्वा तत्र प्रतिष्ठाप्य 'प्रतद्विष्णु'रिति ब्रुवन्।
पाद्यमाचमनं दत्वा पश्चाद्दूर्वाक्षताम्बुभिः।।

मूर्धादि पादपर्यन्तं प्रत्यङ्गमभिपूजयेत्।
'परिलिखित'मिति मन्त्रेण आम्लेन परिशोधयेत्।।

'वारीश्चतस्र' इत्यद्भिः शुद्धाभिरभिषिच्य च।
क्षीरेण पुष्पतोयैर्वा 'नमो वरुण' इत्यतः।।

अङ्गं हरिद्रयाऽऽलिप्य 'सिनीवाली'ति मन्त्रतः।
संस्नाप्य शुद्धतोयेन दद्यादाचमनं पुनः।।

वस्त्रोत्तरीयोपवीतपवित्राणि ददेत्पुनः।
अष्टोपचारैरभ्यर्च्य तत्तन्मन्त्रं समुच्चरन्।।

पुनः पुरुषसूक्तेन 'भूरानिलय' इत्यपि।
गन्धतोयेन संस्नाप्य प्लोतेन विमृजेत्तथा।।

वस्त्रमाचमनं दत्वा विष्टरे स्थापयेत् पुनः।
वस्त्राभरणमाल्याद्यैरलङ्कृत्यानुलिप्य च।।

(दर्शयेत् धूपदीपौ च अर्घ्यमाचमनं तथा।
नीराजनविधानेन नीराजनमथाचरेत्।)

दर्पणं चामरं छत्रं नृत्तं गेयं च वाद्यकम्।
दर्शयित्वाथ देवस्य दत्वा पुष्पाञ्जलिं पुनः।।

'भूरसि भूः प्रतिष्ठित्या' इति मन्त्रं समुच्चरन्।
जीवस्थाने प्रतिष्ठाप्य 'क्षमस्वे'ति प्रणम्य च।।

वेद्यामेवाथवा स्थाप्य कृत्वाम्लादि विशोधनम्।

गन्धतोयाभिषेकं च कृत्वा क्षीराभिषेचनम्।।

गन्धतोयाभिषेकान्ते जीवस्थाने निवेशयेत्।

अथ स्नानक्रियाः सर्वाः 'इषे त्वा'दिसमुच्चरन्।।

'इषे त्वा' स्नापयेन्नित्यम् अङ्गिरो मुनिभाषितम्।

अथवा पौरुषं सूक्तमुच्चरन् स्नापयेत् प्रभुम्।।

**स.४०.२६ - ३१**

**अ.२३**

[अत्र परं रंहेति मन्त्रेण दारुपीठं न्यसेदिति विशेषः।]

**वि.४१.२८१**

भूःप्रपद्य इति देवेशं प्रणम्य, आलयद्वारोत्तरपार्श्वे पूर्वे वा प्रथमावरणे स्नानपीठे परं रंह इत्यवस्थाप्य इषोत्वो र्जेत्वेति जपन् बिम्बं यथाशुद्ध-माम्लाद्यैस्संशोध्य, शुद्धोदकैस्संस्नाप्य, चन्दनोदकैरभिषिच्य, धौतप्लोतवस्त्रेण मूर्धाद्यं विमृजेत्।

### ६.१४.३ कौतुकबेरस्य स्नापनप्रकारः

**स.४३.३९ - ४४**

कौतुके स्नापनं कुर्यान्नित्यं वै चन्दनादिभिः।

कुर्याद्यत्नादशक्तोऽपि विष्णुपञ्चदिनेष्वथ।।

न कुर्याच्चेन्महादोषो भवेदिति न संशयः।
ताम्रेण कौतुकं चेत्तदाम्लेन परिशोधयेत्।।

यस्य यस्य यथाशुद्धिस्तत्तद्द्रव्येण शोधयेत्।
आधावेन च शुद्धेन बिम्बं संशोधयेत् पुनः।।

पश्चान्मन्त्रेण सम्प्रोक्ष्य स्नापयेच्चन्दनोदकैः।
प्लोतवस्त्रेण शुद्धेन तं बिम्बं विमृजेत् पुनः।।

बहिरेवं तु संस्नाप्य पुनरन्तः प्रवेशयेत्।
प्रतद्विष्णुस्तवत इति चोद्धृतां प्रतिमां पुनः।।

तन्मन्त्रेणार्चनापीठे स्थापयेत् प्रतिमां तथा।

### ६.१४.४ नित्यस्नपनाशक्तौ अनुकल्पः

**क्रि.९.७०, ७१, ७४, ७५**

नित्यं कर्तुमशक्तश्चेत् सति वा बेरगौरवे।
संस्थाप्य दर्पणं शुद्धं देवदेवस्य सन्निधौ।।

प्रतिबिम्बगतं बिम्बं दर्शयित्वा दिने दिने।
(स्नापयेत् सफलं प्रोक्तम् इति शातातपोऽब्रवीत्।।)

------------------------------।

दिव्यौ नित्यमशक्तश्चेत् विष्णुपञ्चदिनेषु च।।

तत्तन्नक्षत्रयोश्चैव स्नापयेदिति केचन।

-------------------------।।

प्रणिधिं प्रणवेनाद्भिः पूरयित्वा सहाक्षतम्।।

गायत्र्या तु ध्रुवस्थानं प्रोक्षयेत् तेन वारिणा।

-------------------------------।

### ६.१४.५ चित्रबेरे स्नापनविधिः चित्राभासे प्रोक्षणविधानम्

**स.४३.४५**

रूपे तु स्नापनं कुर्यादरूपे प्रोक्षणं चरेत्।

वर्णयुक्ते ध्रुवस्थाने न कुर्यादिति शासनम्।।

### ६.१४.६ ताम्रजध्रुवबेरस्य स्नपनकालः

**क्रि.५.७८, ७९**

ताम्रजं ध्रुवबेरं चेत् व्यक्तं सर्वाङ्गसुन्दरम्।

कारयित्वा प्रतिष्ठाप्य तथा पर्वणि पर्वणि।।

शुद्धोदैरभिषिच्यैव वस्त्राद्यैरपि भूषयेत्।

### ६.१४.७ अनेकतलविमाने स्नपनम्

**अ.२३**

अनेकतलविमाने तु भूमावादितले हरिम्।

नित्यस्नानं च तत्कुर्यात् शक्तौ सर्वतले चरेत्।।

### ६.१४.८ पञ्चमूर्त्तिविमाने स्नपनम्

**अ.२३**

पञ्चमूर्तिविमाने तु विष्णुमूर्तौ समाचरेत्।
पुरुषादौ भवेद्भक्तिः यत्र तत्रैवमाचरेत्।।

### ६.१४.९ अभ्यञ्जनादीनां निषिद्धकालः

**क्रि.९.५६, ५७**

अष्टम्यां च नवम्यां च चतुर्दश्यां च पर्वणि।।

अभ्यञ्जनं च दन्तानां धावनं वर्जयेत्तथा।